'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥'

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्यवस्यति । विशेषश्च गमनकालान्तपरिहार्यत्वरूपः प्रतीयते ।

**विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ॥ ६६ ॥**
**उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्तिता ॥**

विना कारणमुपनिबध्यमानोऽपि कार्योदयः किञ्चिदन्यत्कारणमपेक्ष्यैव भवितुं युक्तः । तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा । यथा—

'अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥'

अत्र वयोरूपनिमित्तमुक्तम् । अत्रैव 'वपुर्भाति मृगीदृशः' इति पाठेऽनुक्तम् ।

**सति हेतौ फलाभावो[1] विशेषोक्तिस्तथा द्विधा ॥ ६७ ॥**

तथेत्युक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा—

'धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥'

अत्र महामहिमशालित्वं निमित्तमुक्तम् । अत्रैव चतुर्थपादे 'कियन्तः सन्ति भूतले' इति पाठे त्वनुक्तम् । अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तस्यैव भेद इति पृथङ् नोक्तम् । यथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥'

अत्र तनुहरणेनापि बलाहरणे निमित्तमचिन्त्यम् । इह च कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबध्यते । विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेन । एवं च 'यः कौमारहरः—' इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना । 'यः कौमार—' इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः । एवं चात्र विभावनाविशेषोक्त्योः सङ्करः । शुद्धोदाहरणं तु मृग्यम् ।

**जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।**
**क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः ॥ ६८ ॥**
**विरुद्धमिव[2] भासेत विरोधोऽसौ दशाकृतिः ।**

---

१ 'फलाभावो' इति लि. २ 'विरुद्धमेव' इति लि.

क्रमेण यथा—

'तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥'
'सन्ततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥'
'अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥'
'वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः ।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥'
'नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥'

'त्वद्वाजि-' इत्यादि । 'वल्लभोत्सङ्ग-' इत्यादिश्लोके चतुर्थपादे 'मध्यन्दिनदिनाधिपः' इति[3] पाठे द्रव्ययोर्विरोधः । अत्र 'तव विरह-' इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दवानलोष्महृदयभेदनसूर्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते । विरहहेतुकत्वात्समाधानम् । अत्र 'अजस्य-' इत्यादावजत्वादिगुणस्य जन्मग्रहणादिक्रियया विरोधः । भगवतः प्रभावस्यातिशयित्वात्तु समाधानम् । 'त्वद्वाजि-' इत्यादौ 'हरोऽपि शिरसा गङ्गां न धत्ते' इति विरोधः । 'त्वद्वाजि-' इत्यादिकविप्रौढोक्त्या तु समाधानम् । स्पष्टमन्यत् । विभावनायां कारणाभावेनोपनिबध्यमानत्वात्कार्यमेव बाध्यत्वेन प्रतीयते । विशेषोक्तौ च कार्याभावेन कारणमेव । इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः ।

**कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः ॥ ६९ ॥**

यथा—

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥'

अस्याश्चापवादकत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः ।

**गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ।**

---

१ 'हन्ते' इत्येकस्मिन् लि-पुस्तके. २ 'जन्म' इति नास्ति क-पुस्तके; 'गुणस्य ग्रहणादिक्रियया' इति क. ३ 'कार्यभावेन' इति लि. ४ 'अन्याश्रितैः' इति क-ख. ५ 'चेतुं' इति लि.

यद्वारब्धस्य वैकल्य[1]मनर्थस्य च सम्भवः ॥ ७० ॥
विरूपयोः सङ्घटना या च तद्विषमं मतम् ।

क्रमेण यथा—

'सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥' 5

अत्र कारणरूपासिलतायाः 'कारणगुणा हि कार्यगुणमारभन्ते' इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः ।

'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः । 10

'अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥'

अत्र केवलं काङ्क्षितधनलाभो नाभूत्, प्रत्युत क्षारवारिभिर्वदनपूरणम् ।

'क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्तिनो बत धातुश्चरितं सुदुःसहम् ॥' 15

अत्र वनराज[2]श्रियोर्विरूपयोः सङ्घटना । इदं मम ।

यथा वा—

'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥'

समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ॥ ७१ ॥ 20

यथा—

'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥'

विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ।

यथा— 25

'प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥'

आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ॥ ७२ ॥

तत्राश्रयाधिक्ये यथा—

'किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र । 30
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥'

---

१ 'वैफल्य' इति क-ख. २ 'राज्यश्रियोः' इति लि.

आश्रिताधिक्ये यथा—

'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥'

**अन्योन्यमुभयोरेकक्रियायाः करणं मिथः ।**

'त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी ॥'

**यदाधेयमनाधारमेकं चानेकगोचरम् ॥ ७३ ॥**
**किञ्चित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा ।**
**कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ॥ ७४ ॥**

क्रमेण यथा—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥'

'कानने सरिदुद्देशे गिरीणामपि कन्दरे ।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः ॥'

'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥'

**व्याघातः स तु केनापि वस्तु येन यथा कृतम् ।**
**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥ ७५ ॥**

यथा—'दृशा दग्धं मनसिजम्—' इत्यादि ।

**सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ।**

व्याघात इत्येव ।

'इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते मृदुरसि न चायाससहना ।
मृदुत्वं मे हेतुः सुभग भवता गन्तुमधिकं
न मृद्वी सोढा यद्विरहकृतमायासमसमम् ॥'

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम् । नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्येण हेतुतयोपन्यस्तम् ।

**परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ॥ ७६ ॥**

---

१ 'सविकाशे' इति लि. २ 'सम्भृता' इति अ—ब. ३ 'कारणे' इति लि. ४ 'गुणा येषाम्' इति लि. ५ 'कथमपि' इति अ—ब; 'कथमिह' इति रुद्रटकृत-काव्यालङ्कार—संमतः पाठः. ६ 'इति रवौ' इत्यधिकं अ—ब—पुस्तकयोः.

तदा कारणमाला स्यात्

यथा—

'श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।
लोकानुरागो विनयान्न किं लोकानुरागतः॥'

तन्मालादीपकं पुनः। 5

धर्मिणामेकधर्मेण सम्बन्धो यद्यथोत्तरम्॥ ७७॥

यथा—

'त्वयि सङ्गरसंप्राप्ते धनुषासादिताः शराः।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः॥'

अत्रासादनक्रिया धर्मः। 10

पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम्।
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदेकावली द्विधा॥ ७८॥

क्रमेणोदाहरणम्—

'सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम्।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम्॥' 15

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥'

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितं च दृश्यते।

यथा—

'वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु। 20
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्॥'

एवमपोहनेऽपि।

उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते।

यथा—

'राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्। 25
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्॥'

यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत्॥ ७९॥

यथा—

'उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय। 30

---

१ '[illegible]' इति रुद्रटकाव्यालङ्कारे (७।९७)

इत्थं मञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥'

**क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।**
**भवति क्रियते वा चेत्तदा पर्याय इष्यते ॥ ८० ॥**

क्रमेण यथा—

'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे क्रमेण नाभिं प्रथमोदबिन्दवः ॥'

'विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥'

'विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥'

'ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥'

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च । क्वचिदाधेयमपि । यथा—'स्थिताः क्षणम्—' इत्यत्रोदबिन्दवः पक्ष्माद्यसंहतरूप आधारे क्रमेणाभवन् । 'विचरन्ति—' इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एवमन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद् भेदः । विनिमयाभावात्परिवृत्तेः ।

**परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।**

क्रमेणोदाहरणम्—

'दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥'

अत्र प्रथमेऽर्धे समेन, द्वितीयेऽर्धे न्यूनेन ।

'तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥'

अत्राधिकेन ।

**प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ॥ ८१ ॥**
**तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ।**
**परिसंख्या**

क्रमेणोदाहरणम्—

'किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ॥'

अत्र व्यवच्छेद्यं रत्नादि वाच्यम् ।

'किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः ।
को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम् ॥'

अत्र व्यवच्छेद्यं पापाद्यार्थम् । अनयोः प्रश्नपूर्वकत्वम् ।

अप्रश्नपूर्वकत्वे यथा—

'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥'

'बलमार्तभयोपशान्तये विदुषां संमतये बहु श्रुतम् ।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम् ॥'

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा—

'यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराश्चापेषु गुणच्छेदाः—' इत्यादि ।

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि ॥ ८२ ॥**
**यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम् ।**

यथा मम—

'वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः ।
अहमेकाकिनी बाला तवेह वसतिः कुतः ॥'

अनेन पथिकस्य वसतियाचनं प्रतीयते ।

'का विसमा देव्वगई, किं लद्धव्वं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं, किं दुग्गेज्झं खलो लोओ ॥'

अत्रान्यव्यपोहे तात्पर्याभावात्परिसंख्यातो भेदः । न चेदमनुमानम् । साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गीकारात् । न च काव्यलिङ्गम् । उत्तरस्य प्रश्नं प्रत्यजनकत्वात् ।

**दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ॥ ८३ ॥**

मूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका । अत्र च कश्चित्प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं कश्चिदप्राकरणिकार्थात्प्राकरणिकार्थस्येति द्वौ भेदौ । क्रमेणोदाहरणम्—

'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥'

'विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अतितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम् ॥'

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते 'हारोऽ-

यम्–' इत्यादौ । न चेदमनुमानम् । समानन्यायस्य सम्बन्धरूपत्वाभावात् ।

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ।**

यथा—'नमयन्तु[1] शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा ।' अत्र शिरसां धनुषां च नमनयोः सन्धिविग्रहोपलक्षणत्वात्, सन्धिविग्रहयोश्चैकदा कर्तुमशक्यत्वाद्विरोधः । स चैकपक्षाश्रयणपर्यवसानः । तुल्यबलत्वं चात्र धनुःशिरोनमनयोर्द्वयोरपि सर्वथा सम्भाव्यमानत्वात् । चातुर्यं चात्रौपम्यगर्भत्वेन । एवं 'कर्णपूरीक्रियन्ताम्' इत्यत्रापि । एवं 'युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः' । अत्र श्लेषावष्टम्भेन चारुत्वम् ।

'दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा ।'

इत्यत्र चातुर्याभावान्नायमलङ्कारः ।

**समुच्चयोऽयमेकस्मिन्सति कार्यस्य साधके ॥ ८४ ॥**
**खलेकपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ।**
**गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये ॥ ८५ ॥**

यथा मम—

'हंहो धीरसमीर हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह[2] मे त्वमपि चेदुद्दामदावाग्नि-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥'

अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम् । अत्र सर्वेषामपि हेतूनां शोभनत्वात्सद्योगः । अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः ।

सदसद्योगो यथा—

'शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥'

इह केचिदाहुः—'शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वमपि सद-सद्योगः' इति । अन्ये तु 'शशिप्रभृतीनां स्वतःशोभनत्वं धूसरत्वादीनामशोभनत्वमिति सदसद्योगः ।' अत्र हि शशिप्रभृतिषु धूसरादेरत्यन्तमनु-

---

१ 'नमयन्तात्' इति ख–घ; 'नमन्तु' इति अलङ्कारसर्वस्वसंमतः पाठः. २ 'दह-सीति' इति नि.

नितरामिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वं, 'मनसि सप्त शल्यानि' इति सप्तानामपि शल्यत्वेनोपसंहारस्य, 'नृपाङ्गनगतः खलः' इति प्रस्तुत क्रमभेदादुष्टत्वमावहति, सर्वत्र विशेष्यस्यैव शोभनत्वेन प्रक्रमादिति । इह च खले कपोतवत्सर्वेषां कारणानां साहित्येनावतारः । समाध्यलङ्कारे त्वेककार्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः ।

'अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम् ।
मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥'

अत्राद्येऽर्धे गुणयोर्यौगपद्यम्, द्वितीये क्रिययोः । उभयोर्यौगपद्ये यथा—

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥'

'धुनोति चासिं तनुते च कीर्तिम् ।'

इत्यादावेकाधिकरणेऽप्येष दृश्यते । न चात्र दीपकम् । एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारा नियमेन कार्यकारणकालनियमविपर्ययरूपातिशयोक्तिमूलाः । दीपकस्य चातिशयोक्तिमूलत्वाभावः ।

**समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात् ।**

यथा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥'

**प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ॥ ८६ ॥**
**तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ।**

तस्यैवेति रिपोरेव । यथा मम—

'मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् ।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥'

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ॥ ८७ ॥**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ।**

क्रमेण यथा—

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्–' इत्यादि ।

'तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा ।

---

१ 'चमत्कारविधायित्वं......विशेष्यस्यैव' इति एतन्नास्ति नि–पुस्तके तच्च प्रामादिकमिव प्रतिभाति । टीकायां व्याख्यातत्वात् ।

मिलन्दीवरचतुष्टयी यदि च ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥'

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम् ।

**उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ॥ ८८ ॥**

5 **कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ।**

यथा—

'अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥'

अत्र प्रथमपादेनोत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलङ्कारः । यथा—
10 'अहमेव ब्राह्मणो वदति' इत्यादि ।

**मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा ॥ ८९ ॥**

अत्र समानलक्षणं वस्तु क्वचित्सहजं क्वचिदागन्तुकम् । क्रमेण यथा—

'लक्ष्मीवक्षोजकस्तूरिलक्ष्म वक्षःस्थले हरेः ।
अस्तं नालक्षि भास्वत्या भासा नीलोत्पलाभया ॥'

15 अत्र भगवतः श्यामा कान्तिः सहजा ।

'सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम् ॥'

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः ।

**सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ।**

20 यथा—

'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥'

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम् । इह तूभयोस्तुल्यगुणतया भेदाग्रहः ।

25 **तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ॥ ९० ॥**

यथा—

'जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥'

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम् । इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयत इति भेदः ।

१ 'लक्ष्मणा' इति ख. २ 'पर्यन्तपातिनः' इति ज-ब. ३ 'भेदः' इत्यंशो नास्ति ज-ब-पुस्तकयोः.

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ।**

यथा—

'हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम ।
गुणगौर निषण्णोऽपि कथं नाम न रज्यसि ॥'

यथा वा—

'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥'

पूर्वत्रातिरक्तहृदयसम्पर्कोत्पादवत्यपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता । अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ॥ ९१ ॥**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ।**

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । तत्राकारेण यथा—

'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥'

अत्र कयाचित्कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम् । इङ्गितेन यथा—

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

अत्र विटस्य भ्रूविक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः ।

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ॥ ९२ ॥**

यथा—

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'

नेयं प्रथमापह्नुतिः । अपह्नवकारिणो विषयस्यानभिधानात् । द्वितीयापह्नुतिभेदश्च तत्प्रस्तावे दर्शितः ।

---

१ 'रोमाञ्चादिविसंस्थुल' इति ज-ब.

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।**

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः । यथा मम—

'लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण ।
स्फूर्जद्धुंकारघोषः प्रतिदिशमखिलान्द्रावयन्नेष जन्तू-
न्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥'

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ॥ ९३ ॥**
**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ।**

यथा—

'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥'

यथा वा—

'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥'

न चायं प्रसादाख्यो गुणः । भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् । न चाद्भुतो रसः । विस्मयं प्रत्यस्य हेतुत्वात् । न चातिशयोक्तिरलङ्कारः । अध्यवसायाभावात् । न च भ्रान्तिमान् । भूतभाविनोर्भूतभावित्वेनैव प्रकाशनात् । न च स्वभावोक्तिः । तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम् । अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति । यदि पुनर्वस्तुनः कथित्स्वभावोक्तावप्यस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः ।

'अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥'

अत्र प्रत्यक्षायमाणत्वमेव वर्णनाश्रयमलङ्कारः । वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य स्वरूपत्वात् । वस्तुनोऽप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः । यथोदाहृते 'आसीदञ्जनम्–' इत्यादौ ।

**लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ॥ ९४ ॥**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ।**

क्रमेणोदाहरणम्—

१ 'कारणम्' इति क-ख. २ 'तत्र' इति लि. ३ 'प्रकाशनात्' इति लि.

'अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥'
'नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥'

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा ॥ ९५ ॥**
**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ।**
**रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥ ९६ ॥**

तदाभासौ रसाभासो भावाभासश्च । तत्र रसयोगाद्रसवदलङ्कारो यथा—'अयं स रसनोत्कर्षी–' इत्यादि । अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रियत्वात्प्रेयः । यथा मम—
'आमीलितालसविवर्तिततारकाक्षीं मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥'
अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य । ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा—

'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥'

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परिहारः । यथा—

'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥'

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।

**भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ।**

तदाख्यका भावोदय-भावसन्धि-भावशबलनामानोऽलङ्काराः । क्रमेणोदाहरणम्—

'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥'

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् ।

'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥'

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम् ।

'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।

इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्याददानाभिधत्ते ॥'

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम्। इह केचिदाहुः—'वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः। रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलङ्कारता भवितुं युक्ता' इति। अन्ये तु—'रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याङ्गीकार्य एव' इति। अपरे च—'रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यतः, रूपकादौ तु वाच्याद्युपस्कारमजागलस्तनन्यायेन' इति। अभियुक्तास्तु—'स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते। समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालङ्कृतिता, न त्वास्वादस्य, तस्योक्तरीतिविरहात्' इति मन्यन्ते। अत एव ध्वनिकारेणोक्तम्—

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥'

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत। एवं च यत्र कैश्चिदुक्तम्—'रसादीनामङ्गित्वे रसवदाद्यलङ्कारः। अङ्गत्वे तु द्वितीयोदात्तालङ्कारः', तदपि परास्तम्।

**यद्येत एवालङ्काराः परस्परविमिश्रिताः ॥ ९७ ॥**
**तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा।**

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक्चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ। तत्र

**मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ॥ ९८ ॥**

एतेषां शब्दार्थालङ्काराणाम्। यथा—

'देवः पायादपायान्नः स्मेरेन्दीवरलोचनः।
संसारध्वान्तविध्वंसहंसः कंसनिषूदनः॥'

अत्र पायादपायादिति यमकम्। संसारेत्यादौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः। द्वितीये पादे उपमा, द्वितीयार्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः। एवमुभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः।

---

१ 'निवाद' इति लि. २ 'अङ्गितो' इति लि.

अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥ ९९ ॥

अङ्गाङ्गिभावो यथा—

'आकृष्टिवेगविगलद्भुजगेन्द्रभोगनिर्मोकपट्टपरिवेष्टनयाम्बुराशेः ।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य मन्दाकिनी चिरमवेष्टत पादमूले ॥' 5

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः । सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम् । श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम् । अतिशयोक्तिश्च मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षाया अङ्गम् । उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम् । 10

यथा वा—

'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा[1] तथापि न समागमः ॥'

अत्र समासोक्तिर्विशेषोक्तेरङ्गम् । सन्देहसङ्करो यथा— 15

'इदमाभाति गगने भिन्दानं सन्ततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥'

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति[3] मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्[4], अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्तिः, 20 यद्वाऽप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः ।

यथा वा 'मुखचन्द्रं पश्यामि' इत्यत्र किं मुखं चन्द्र इवेत्युपमा, उत चन्द्र एवेति रूपकमिति सन्देहः । साधकबाधकयोर्द्वयोरेकस्य सद्भावे न पुनः 25 सन्देहः । यथा—'मुखचन्द्रं चुम्बति' इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम् । चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् । 'मुखचन्द्रः प्रकाशते' इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।' 30

अत्र योषित आलिङ्गनं नायकस्य सदृशो नोचितमिति लक्ष्म्यालिङ्गनस्य

---

१ 'भिन्ना' इति क-ख. २ 'आकृष्ट' इति क-ख. ३ 'इदमिदमिति' इति नि.
४ 'चन्द्रत्वारोपात्सुरूपकम्' इति नि.

तत्रान्यस्यासम्भवादुपमाबाधकम्, नारायणे सम्भवाद्रूपकम्। एवम्—

'वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्।'

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासम्भवाद्रूपकस्य बाधकता। एवं 'सुन्दरं वदनाम्बुजम्' इत्यादौ साधारणधर्मप्रयोगे 5 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति वचनादुपमासमासो न सम्भवतीत्युपमाया बाधकः। एवं चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव। एकाश्रयानुप्रवेशो यथा मम—

'कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।
10 सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः॥'

अत्र कटाक्षेणापीषत्क्षणमपीत्यत्र छेकानुप्रासस्य निरीक्षेतेत्यत्र क्षकार-मादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः। एवं चात्रैवानुप्रासार्थापत्त्यल-ङ्कारयोः। यथा वा—'संसारध्वान्तविध्वंस-' इत्यत्र रूपकानुप्रासयोः। 15 यथा वा—'कुरवका रवकारणतां ययुः' इत्यत्र रवका रवका इत्येकं वकार-ककार-इत्येकमिति यमकयोः।

यथा वा—

'अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु।
सोहइ पसारिअगीआणं णच्चिअं मोरविन्दाणम्॥'

20 अत्र 'पहिअसामाइएसु' इत्येकाश्रये पथिकश्यामायितेषूपमा, पथिक-सामाजिकेष्विति रूपकं प्रविष्टमिति।

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य
25 साहित्यतत्त्वमखिलं सुखमेव वित्त ॥ १०० ॥

यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलङ्करोति।
तावन्मनः संमदयन्कवीनामेष प्रबन्धः प्रथितोस्तु लोके ॥१०१॥

इत्यालङ्कारिकचक्रवर्तिसान्धिविग्रहिकमहापात्रश्रीविश्वनाथकविराजकृते
साहित्यदर्पणे दशमः परिच्छेदः।

समाप्तश्चायं प्रबन्धः।

---

१ 'रवकारणतां०' इति लि. २ 'गीआणं' इति लि.

# PARICHCHHEDA I.

ग्रन्थारम्भे &c. (p. 1, l. 5). All Sanskrit writers generally introduce their works with a salutation or benediction. This (Maṅgala as it is called) is necessary for the removal of obstacles and for the safe completion of the work undertaken. The efficacy of Maṅgala is emphasized by so early a writer as Patañjali, who says "माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्ध-शब्दमादितः प्रयुङ्क्ते मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्म-त्पुरुषकाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति।" (p. 7, vol. I of the महाभाष्य ed. by Kielhorn). Compare also the interesting discussion about the necessity and efficacy of Maṅgala in the Siddhānta-Muktāvali and the Tarkadīpikā of Annam-bhaṭṭa.

It would have been better if the author had said प्रारिप्सित-निर्विघ्नपरिसमाप्तिकामः instead of निर्विघ्नेन प्रारिप्सितपरिसमाप्ति॰. But he is in good company; e. g. Abhinavagupta says in his ध्वन्या-लोकलोचन "व्याख्यातृश्रोतॄणामविघ्नेनाभीष्टव्याख्याश्रवणलक्षणफलसम्पत्तये &c." (p. 1); and नमिसाधु in his comment upon Rudraṭa's Kāvyā-laṅkāra says "अविघ्नेन शास्त्रसमाप्त्यर्थं" (p. 1). निर्विघ्नेन प्रारिप्सित-परिसमाप्तिकामः desiring the unobstructed completion of what he wishes to begin. वाङ्मयाधिकृततया (p. 1, l. 5) वाङ्मये अधिकृततया. वाङ्मय* means "Literature"; compare लिपेर्यथावद्ग्रहणेन वाङ्मयं नदी-मुखेनेव समुद्रमाविशत् ॥ रघु. III. 28. वाङ्मयाधि॰ means 'Because she (Goddess of speech) is the constituted authority in or has sway over the province of Literature.' वाग्देवतायाः सांमुख्यमाधत्ते—supply ग्रन्थकृत्. 'He (the author) makes the goddess of speech favourable (to his object)'. विश्वनाथ wrote the Kārikās as well as the Vṛtti. But he speaks of himself in the third person (आधत्ते) following the practice of such writers as Mammaṭa, who says about himself "ग्रन्थारम्भे विघ्नविघाताय...ग्रन्थकृत् परामृशति." Compare the words of मेधातिथि 'प्रायेण ग्रन्थकाराः स्वमतं परापदेशेन ब्रुवते' or of कुल्लूक (on मनु I. 4) 'प्रायेणाचार्याणामियं शैली यत्स्वाभिप्रायमपि परो-पदेशमिव वर्णयन्ति.'

शरदिन्दु॰ (p. 1, ll. 7-8). Construe सा शरदिन्दुसुन्दररुचिः गिरां देवी तमः अपहृत्य मे चेतसि अखिलान् अर्थान् सन्ततं प्रकाशयतु. सा means 'well-

---

* For the derivation of वाङ्मय see सिद्धान्तकौमुदी on the वार्तिक 'एकाचो नित्यम्' on 'नित्यं वृद्धशरादिभ्यः' IV. 3. 144.

known.' शरदिन्दु॰—Dissolve शरदिन्दोरिव सुन्दरी रुचिर्यस्याः. Many writers on Rhetoric appropriately praise the goddess of speech at the beginning of their works; vide the काव्यप्रकाश, the काव्यादर्श, अलङ्कारसर्वस्व &c.

अस्य ग्रन्थस्य...फलवत्त्वम् (p. 1, l. 9). 'As this work is ancillary to poetry it can be fruitful by the fruits of Poetry only.' No one, not even a fool, does anything without having some purpose in view. Unless the author tells us what is to be gained by a study of his work, nobody will care to learn it.* Therefore the फल of the study of this work must be mentioned. This work is auxiliary to Poetry inasmuch as it helps us to understand thoroughly the elements of Poetry, and consequently helps the reader by giving him a capacity to appreciate and to compose the best Poetry. So the final aim of it being proper appreciation and creation of Poetry, the aim and purpose of Poetry must be the end and aim of this book also.†

चतुर्वर्ग॰—(p. 1, l. 10). Construe यतः अल्पधियामपि चतुर्वर्गफलप्राप्तिः काव्यादेव सुखात् (भवति) तेन (तस्मात्) तत्स्वरूपं (काव्यस्वरूपं) निरूप्यते. चतुर्वर्ग means 'the class of four' i. e. the four पुरुषार्थs धर्म, अर्थ, काम and मोक्ष. (p. 1, l. 12) काव्यतः चतुर्वर्गफलप्राप्तिः सुप्रतीतैव—It is well-known that the four (mentioned above) are the fruits of Poetry. रामादिवत्......उपदेशद्वारेण. प्रवृत्ति and निवृत्ति are to be construed respectively with कृत्य and अकृत्य, i. e. कृत्ये प्रवृत्तिः अकृत्यात् निवृत्तिः; compare the words of Mammata रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं......करोतीति (K. P. I ul.). The fruits of Poetry are differently given by different writers —e. g. रुद्रट in his Kāvyālaṅkāra (I. 4-13) practically says the same thing as our author. Vāmana, on the other hand, says that the fruits of Kāvya are प्रीति (Pleasure) and कीर्ति (I. 1. 5). Compare the words of Mammata 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' (K. P. उल्लास I.)

धर्मार्थकाम॰ (p. 1, ll. 15-16). This verse is taken from the ancient Rhetorician Bhāmaha (I. 2). A Transcript in our possession reads 'प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम्'. But the

* सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥ श्लोकवा. 1. 12

† यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं तथा काव्याङ्गस्यास्य ग्रन्थस्य काव्यफलैरेव फलवत्त्वमिति भावः ।

verse is everywhere quoted as it is in the text. साधुकाव्यनिषेवणम्, constant application to, or study of, good Poetry (whether by way of composing it or reading it). प्रीतिं करोति causes delight (to the author as well as to the reader). वैचक्षण्य means 'thorough mastery, proficiency.'

किं च......व्युत्पत्त्याधायकत्वाच्च (p. 1, ll. 17-21). The author shows how Poetry severally leads to the attainment of each of the four goals of man. The word काव्यात् is to be connected with each of the four words धर्मप्राप्तिः, अर्थप्राप्तिः etc. एकः शब्दः सम्यग्ज्ञातः &c. This passage is often quoted as a Vedic one. The readings, however, are different in each case. J and B read स्वर्गे लोके च (in heaven as well as in this world) for स्वर्गे लोके. Our reading is supported by the तन्त्रवार्तिक (p. 228), by कैयट (p. 10) and by the सर्वदर्शनसंग्रह (p. 139 B. I. edition). The तन्त्रवार्तिक adds शास्त्रान्वितः. Compare for the idea the verse गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः । दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ काव्यादर्श I. 6. अर्थप्राप्तिश्च प्रत्यक्षसिद्धा—As to the attainment of wealth (by means of Poetry), we see it with our own senses i. e. we see men making money by writing poems. कामप्राप्तिश्चार्थद्वारैव—Poetry does not directly lead to the attainment of physical comforts, but only indirectly i. e. it makes the poet rich and then he can enjoy life. Compare कामन्दक I. 49. 'धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः'. मोक्षप्राप्तिश्चैत......नुसन्धानात्. एतज्जन्यं (काव्यजन्यं) यद्धर्मफलं तस्य अननुसन्धानात् by not regarding (as the goal) or not hankering after the fruits of merit produced by it (by writing poems). The idea may be explained as follows:—The composition of poems leads, as said above, to the attainment of religious merit and the pleasures of heaven as a consequence of it. These, although in themselves good enough, are not the highest goal to be aimed at. They are transitory after all. One should not rest content with them, because when one's merit is exhausted, one will have again to suffer a fall from heaven. He should therefore aim at Final Beatitude (मोक्ष). This he can do only if he performs his individual duties without hankering after their proffered reward and thus strives to attain to correct knowledge, knowledge contained in the Upanishads &c. Compare तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते । छा० उप० VIII. 1. 6; प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ मुण्डकोपनि० I. 2. 7. मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च—The passages which are useful for attaining Moksha are those contained in the Upanishads,

the Bhagvatgitâ, महाभारत, the भागवतपुराण and others. व्युत्पत्ति* means 'thorough understanding or comprehension'. व्युत्पत्त्याधायकत्वात्—Because it produces a thorough comprehension of.

चतुर्वर्गप्राप्तिर्हि...काव्यादेव ( p. 1, ll. 21-23 ). In these lines the author points out the superiority of Poetry over the Vedas &c. as regards the attainment of the four पुरुषार्थs. The Vedas and S'âstras are equally capable of leading to धर्म &c.; but Poetry is superior to them in three points:—I. Vedas &. are dry and insipid; while Poetry causes the highest pleasure;

II. The Vedas can be learnt with great difficulty; while Poetry is comparatively very easy;

III. It is those of mature intellect only who can study the Vedas, while poetry can be learnt even by those whose intellect is tender ( not developed ). Compare प्रतापरुद्रीय ( p. 5 ) 'यथा वेदशास्त्रपुराणादेर्हितप्राप्तिरहितनिवृत्तिश्च तथा सदाकर्णनात्काव्यादपि । स्यात् विशेषः । काव्यात्कर्तव्यतार्थीः सरसा अन्यत्र न तथा ॥'. परमानन्दसन्दोह—परमश्चासौ आनन्दः तस्य सन्दोहः (परम्परा). For सुकुमारमतीनां &c. compare the words of प्रदीप ( p. 7. Chandorkar ) 'ये सुकुमारमतयोऽतिसुखितत्वेन राजकुमारादयो नीरसे नीतिशास्त्रे प्रवर्तयितुमशक्यास्तान्काव्यं कान्तेव सरसतापादनेनाभिमुखीकृत्योपदेशं ग्राहयति । गुडजिह्विकया तिक्तमिवौषधम् ।'. Compare also "ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे । लघु मृदु च नीरसेभ्यस्ते हि त्रस्यन्ति शास्त्रेभ्यः ॥" रुद्रटकाव्यालंकार XII. 1 ; *vide* वक्रोक्तिजीवित (I. 4.) 'धर्मादिसाधनोपायः सुकुमारक्रमोदितः । काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥.'

ननु तर्हि परिणतबुद्धिभिः......न स्यात् ( p. 1. l. 24-p. 2. l. 2 ). If an objector were to say 'Let Poetry be useful to those whose minds are not mature, but why is Poetry necessary for those whose intellects are mature, as they can very well grasp the meaning of the Vedas?' We reply:—it is quite true that they can understand the Vedas and would attain to धर्म &c., but even to them the study of the Vedas would be dry and difficult, while Poetry will be pleasing and easy, and yet will bring about the same result. Who would then not prefer the more pleasing to the one which is dry and troublesome? कटुकौषधोपशमनीयः to be cured by bitter drugs. सितशर्करा sugar-candy. Compare for the idea कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् । आह्लाद्यमृतवत्काव्यमविवेकगदापहम् ॥ काव्यालङ्कारकामधेनु ( p. 6. Benares edition ). The last verse is taken from the वक्रोक्तिजीवित (I. 7 ).

---

*See रुद्रट's definition 'छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् । युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन ॥' I. 18.

किं च काव्यस्योपादेयत्वम्—&c. (p. 2, l. 3 ff.). In the foregoing passage the author has established by reasoning the excellence of poetry; now he quotes ancient authority in support of his views. अग्निपुराण—This Purāṇa is a peculiar one. It is a sort of an Encyclypædia of Sanskrit literature. It has chapters on साहित्य, छन्दःशास्त्र, पाकशास्त्र, शालिहोत्र, &c. It gives a brief summary of the भगवद्गीता in the very words of the latter. Many of its verses are the same as in Amara's lexicon. It is something like "Enquire within for everything." नरत्वं दुर्लभं occurs in अग्नि० 337. 3 and 4 (Ānandās'rama). For सुदुर्लभा, the Purāṇa has च दुर्लभा. कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा—to attain to the position of a poet is very rare there (i. e. even among those who are learned) and (real) poetic inspiration is rarer still among them (the so-called poets). The Agnipurāṇa makes a distinction between कवित्व and शक्ति. शक्ति is the same as प्रतिभा as said by रुद्रट 'प्रतिभेत्यपरैरुदिता' I. 16. शक्ति or प्रतिभा is defined by मम्मट as कवित्वबीजरूपः संस्कारविशेषः; by रुद्रट as 'मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य । अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः' ॥ I. 15 and by Jagannātha 'काव्यघटनानुकूलशब्दार्थोपस्थितिः' (p. 8 of R. G.); 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' । भट्टतौत. त्रिवर्गसाधनं नाट्यम्—These words occur in the Agnipurāṇa Adhyāya 338, 7 (Ānandās'rama) 'विशेषोऽस्त्वपरे वाच्यः सामान्यं पूर्वमुच्यते । त्रिवर्गसाधनं नाट्यमित्याहुः करणं च यत् ॥'. तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् । अमर० I. 7. 10. त्रिवर्ग means the three viz., धर्म, अर्थ, and काम. नाट्य (the science of dramaturgy or dramatic representation) is a means of accomplishing the three. काव्यालापाश्च &c. This occurs in the विष्णुपुराण I. 22. 84. (ed. by Mr. Bhagvat). There we read शब्दमूर्तिधरस्यैते for एते विष्णोरंशा महात्मनः of the text.

तेन हेतुना &c. (p. 2, l. 9)—the word तेन here is the one occurring in the कारिका 'चतुर्वर्गफलप्राप्तिः' &c. above. तेन हेतुना for that reason. एतेनास्याभिधेयं च प्रदर्शितम्—By the words (तत्स्वरूपं निरूप्यते) the subject of this treatise has been indicated. After pointing out the reward of reading this book (i. e. the प्रयोजन or फल) the author points out the subject (अभिधेय i. e. विषय) of the work. According to ancient Sanskrit writers, every book has four requisites or अनुबन्धs as they are called, viz. अधिकारिन्, विषय, सम्बन्ध and प्रयोजन. Compare वेदान्तसार p. 3. 'तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि'. Here the author spoke of प्रयोजन and now speaks of the विषय. The सम्बन्ध is that of कार्यकारणभाव between the प्रयोजन and विषय. The अधिकारी is one that wants to learn the essentials of Poetry.

कश्चित्तददोषौ &c. ( p. 2, l. 10 ff. ). The author alluded to is Mammaṭa, who defines Kāvya as quoted by S. D. here. Construe अदोषौ सगुणौ पुनः क्वापि अनलङ्कृती शब्दार्थौ तद् (i. e.) काव्यम्:—Poetry is constituted by word and sense which are faultless and possessed of qualities and which are further rarely without figures of speech. एतच्चिन्त्यम् Lit. 'This should be considered' i. e. this is doubtful, improper.

Our author first selects for criticism the word अदोषौ in Mammaṭa's definition of poetry. यदि दोषरहितस्यैव काव्यत्वाङ्गीकारः &c. ( p. 2, l. 12 ) If you accept as poetry that alone which is free from fault, then the verse न्यक्कारो &c. would not be a poem, as it has the fault विधेयाविमर्श.

न्यक्कारो ह्ययमेव &c. ( p. 2, ll. 14-18 ). रामेण राक्षसवधे क्रियमाणे क्षुब्धान्तःकरणस्य रावणस्य स्वाधिक्षेपोक्तिरियम् । ह. नं. That there are enemies ( to me ) is itself a humiliation, to add to it, he is an anchorite and as such kills a number of Rākshasas just here ( under my nose ). Oh wonder, then, that Rāvaṇa lives yet! सोऽप्यत्रैव निहन्ति राक्षसकुलम्—तापसोऽपि मत्समीप एव ( लङ्कायामेव न तु दूरे ) राक्षसकुलं हन्तीति न्यक्कारातिशयः. जीवत्यहो रावणः—Ha! does Rāvaṇa live? ( as all this happens, Rāvaṇa must not be living, some one would say ; but alas, he is alive ). धिग् धिक् &c—Fie upon ( my mighty son ) the conqueror of Indra ; what is the use of Kumbhakarṇa being awakened (mighty brother and ally though he be ). स्वर्गग्राम....भुजैः. The plural is used because Rāvaṇa had twenty arms ( as contrasted with the two of the ascetic Rāma ). स्वर्ग एव ग्रामटिका ( क्षुद्रग्रामः ) तद्विलुण्ठनेन वृथोच्छूनैः पुष्टैर्भुजैः what is the use of these arms that are fattened or puffed up in vain with the spoils of the puny hamlet of heaven! What is called विधेयाविमर्श here is the same as the more general name, अविमृष्टविधेयांश i. e. 'अविमृष्टः ( प्राधान्येनानिर्दिष्टः ) विधेयांशः यत्र' प्रदीप p. 214. Every sentence is made up of two parts, the subject ( अनुवाद ) and the predicate ( विधेय ). It is a general rule that the subject is placed first and the predicate last. In ordinary life, we refer to the subject first and then predicate something about it. If we change this order, then there may be confusion in understanding the exact meaning of the speaker. What comes at the beginning of a sentence would be called the subject and it might really have been meant as the predicate. Let us take an example. In the verse the word 'अरयः' refers to the existence of enemies and it is the intention

of the speaker to convey, what is not known from any other source, that the existence of enemies is a great humiliation; therefore the word न्यक्कार is the predicate. The natural order, then, of the words ought to be अयमेव न्यक्कारः and not न्यक्कारोऽयमेव, in accordance with the old maxim 'one should not utter the predicate before the subject is expressed' 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । न ह्यलब्धास्पदं किंचित्कुत्रचित्प्रतितिष्ठति' ॥*. The order being inverted, we understand the meaning intended after an effort. As, instead of saying अयमेव न्यक्कारः, the speaker says 'न्यक्कारः अयमेव' (all distinct words), the fault is said to be वाक्यगत. वाक्यगत अविमृष्टविधेयांश is defined in the Ekâvali as अनुवाद्यविधेयांशावुक्तौ स्यातां विपर्ययेण यदा । अविमृष्टविधेयांशो भवति तदानीं तु वाक्यगतः ॥ p. 169; see also the साहित्यदर्पण (p. 371 Nir.). "'न्यक्कारो ह्ययमेव मे यद' इत्यत्र चायमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् । तच्च शब्दरचनावैपरीत्येन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः ।". अनुवाद्य and विधेय are defined as follows:—यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता । तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता ॥ The subject is that which is connected with the relative pronoun (यत्), which comes first in the sentence and which is accomplished (or well known); while the predicate is connected with the pronoun 'that' (तत्), it is subsequent (to the अनुवाद्य) and it is something to be accomplished (or not known). Moreover in the words वृथोच्छूनैः किमेभिर्भुजैः there is अविमृष्टविधेयांश (पदगत) दोष. Here the subject is the fact of being puffed up (i. e. उच्छूनत्व is the अनुवाद्य) and what is predicated is the uselessness of this pride (i. e. वृथात्व is the विधेय). But this विधेय, as it forms part of the compound वृथोच्छूनैः, becomes subordinate. It is the subject that is subordinate in a sentence† and hence वृथा, the real विधेय, presents the appearance of being the subject, which is subordinate and thus there is अविमृष्टविधेयांशदोष. See साहित्यद० (p. 366) 'अत्र वृथात्वं विधेयम्, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत् ।'.

तत्तु अतिरोहित etc. (p. 2, l. 17). Although the verse 'न्यक्कारो ह्ययमेव' is thus tainted with the fault of अविमृष्टविधेयांश, still it

---

* This is often quoted as from Kumârila, but we do not find it in the index to the श्लोकवार्तिक. It is, however, an old न्याय, as it is quoted even by Hemachandra (p. 172 of काव्यानुशासन Nir. Ed.)

† See प्रदीप (p. 214) 'प्राधान्यं च विधिविषयत्वेनान्वयः । सा चानुपसर्जनीभूतत्वे सत्युद्देश्यत्वान्तरमेव' ; also तरल p. 152 'यद् विधेयस्य प्राधान्यं नाम तात्पर्यविषयत्वमात्रम्, अप्राधान्यं चानुवाद्यत्वादिविषयत्वमात्रम्' ।

has been admitted to be a specimen of the highest type of Poetry as it contains suggestion. It is Ānandavardhana, the author of the ध्वन्यालोक, who looks upon this verse as a specimen of the highest type of Poetry (see pp. 153-154 of the ध्वन्यालोक). Poetry is divided by Ānandavardhana and others like मम्मट into three varieties, उत्तम, मध्यम, and अधम. That is उत्तम काव्य where the व्यंग्य (suggested) sense far excels the expressed sense.* It is also called ध्वनि. In the verse under discussion, मे यदरयः, तत्राप्यसौ तापसः, अत्रैव, राक्षसः, धिग्धिक्, भुजैः etc. suggest meanings that are far more charming than the plain expressed sense;† i. e. by the word भुजैः (in the plural), it is suggested that they are a mere burden; by the word तापस is suggested the idea that he must be destitute of prowess. As Mammaṭa is a great admirer of आनन्दवर्धन and as he defines उत्तम or ध्वनिकाव्य in the same way as आनन्दवर्धन does, he (मम्मट) also must be looked upon as regarding the verse 'न्यक्कारो ह्ययमेव' etc. as an example of उत्तम काव्य.

Kāvya is defined above as अदोषौ etc.; this verse (न्यक्कारो etc.) is shown to be faulty; therefore it cannot be an example of Poetry; but it has been implicitly admitted to be the highest type of Poetry by Mammaṭa. So his definition is too narrow, as it would exclude the verse in question from the province of Poetry. तस्मादव्याप्तिलक्षणदोषः (p. 2, l. 19). Every definition must be free from three faults, viz. अव्याप्ति, अतिव्याप्ति and असंभव. It must neither be too narrow, nor too wide, nor quite impossible. Here Mammaṭa's definition of काव्य is open

---

* इदमुत्तममतिशयिनि व्यंग्ये वाच्याद्ध्वनिर्बुधैः कथितः। काव्यप्रकाश I. 4.

† See ध्वन्यालोक p. 153 on न्यक्कारो etc.—'अत्र हि श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वं दृश्यते। ......सर्वेषिचास्य व्यञ्जकभूयस्त्वे च वर्तमाने काव्यस्य सर्वातिशायिनी बन्धच्छाया समुन्मीलति। यत्र हि व्यंग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावस्तत्रापि काव्ये कापि बन्धच्छाया किमुत यत्र तेषां बहूनां समवायः। यथात्रानन्तरोदिते श्लोके'; read the remarks of लोचन on these words of the ध्वन्यालोक. See हेमचन्द्र's अ. चि. p. 181 'मम अरय इति बहुवचनेन [illegible] इति व्यज्यते। [illegible] ......[illegible] भुजैरिति बहुवचनेन [illegible] इति व्यज्यते इति।'

to the fault of अव्याप्ति, because, as said above, it excludes such a verse as न्यक्कारो &c. which is universally acknowledged to be the best type of Poetry.

ननु कश्चिदेवांशः.........चेत् (p. 2, l. 18). An objection is raised against the criticism of Mammaṭa's definition तद्दोषौ &c. In the verse न्यक्कारः etc., it is only a *part* that is faulty, and not the *whole*; therefore we may omit what is faulty and regard the remainder as an example of Poetry. To this S. D. replies in the words तर्हि......निर्दोषस्यैकान्तमसम्भवात् (p. 2, ll. 19-26). The first objection against the above compromise is contained in the words तर्हि यत्रांशे etc. up to किमपि न स्यात्. That part of the verse न्यक्कारः etc. in which there is a fault, leads us to call it non-poetry; while that part of it in which there is Dhvani *i. e.* suggestion, leads us to call it the best poetry. Thus, being dragged in two opposite directions by these two parts, the verse would neither be poetry nor non-poetry.

न च कतिपयांशे &c. (p. 2, l. 21). In these words S. D. attacks the idea that one part of a verse may be faulty, while the remainder may be good poetry. He says that such blemishes as श्रुतिदुष्ट etc. (harsh or jarring expression) do not mar a *part* of a poem merely, but the *whole* poem if they are faults at all. The idea is that harshness spoils the charm of the Rasa and therefore of the whole verse and not only of those particular words which are harsh. In certain circumstances, however, harshness may be an ornament, instead of being a blemish. Hence, harshness is either a blemish or not a blemish. If the former, it mars the beauty of the whole poem. In such a case, then, you cannot say. 'Let a part be faulty; the remainder may be good poetry.' If in न्यक्कारो etc. it is admitted that there is अविमृष्टविधेयांशदोष, then the whole verse becomes faulty and hence it would not be poetry at all. On श्रुतिदुष्ट, the लोचन remarks (p. 82) "श्रुतिदुष्टा अर्थदुष्टा वाक्यार्थ-बलादश्लीलार्थप्रतिपत्तिकारिणः । यथा 'छिद्रान्वेषी महास्तब्धो वातादिर्बोधवर्धनः' । कल्पनादुष्टा तु द्वयोः पदयोः कल्पना । यथा 'कुरु रुचिम्' इत्यत्र* पदव्यत्यासे । श्रुतिकटुवत् 'अवाक्षीत् अद्योत्सीत् प्लोष्टि' इत्यादि ।"

In 'तथाहि...उदाहृतः' (p. 2, ll. 22-26) S. D. supports what he has said above *i. e.* a fault becomes so when it mars the *rasa* and thus the whole poem; it cannot spoil only a part of the poem. तथाहि—to explain. A दोष is defined by Mammaṭa as

* See for the meaning of this K. P. V. p. 238 (Va.)

'मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः । उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥' (7th उल्लास) and by S. D. as 'रसापकर्षका दोषाः'. A दोष is that which mars the *rasa*. काव्यस्यात्मभूतस्य रसस्य—*rasa* is said to be the soul of Poetry, e. g. ध्वन्यालोक II. 7, p. 78 'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।'; also काव्यस्यात्मा ध्वनिरिति etc. I. 1; शौद्धोदनि says 'शब्दार्थौ काव्यस्य शरीरम्, आत्मा रसः' etc. If what are called faults do not mar the beauty of the Rasa, the soul of poetry, then they cease to be faults. This is admitted by all, including Mammata, e. g. harsh words are a fault in the शृङ्गाररस, because they mar the beauty of that *rasa*, but in बीभत्स or रौद्ररस, harshness is not a fault, as it does not mar their beauty. Mammata himself says in the 7th ul. (63rd कारिका) p. 445 (Vā.) 'इदानीं क्वचिद्दोषा अप्येते इत्युच्यते'. S. D. says in the 7th परिच्छेद "उक्तदोषाणां न क्वचिद्दोषत्वं क्वचिद्गुणत्वमित्याह—वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते । रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥' p. 405 (Nir). तेषां श्रुतिदुष्टादीनाम्. अन्यथा (p. 2, l. 23) otherwise, i. e. if it were not admitted that faults are so only when they mar the रस and are not faults when they do not mar the *rasa*. नित्यदोषानित्यदोषः— It would not be possible to divide faults into नित्य and अनित्य (as is universally done). If faultiness did not depend upon the fact of marring the *rasa*, then this division of दोषs would be impossible. A fault will always be a fault. But if you postulate, as regards the faults, the criterion that whatever mars the *rasa* is a fault and that what does not do so is not a fault, then only can you say that a certain दोष is अनित्य (not invariably so), e. g. श्रुतिकटु is a दोष in शृङ्गाररस, but not so in वीर. दोषs are generally divided into नित्य and अनित्य. See काव्यप्रदीप p. 201 (Nir) "स चायं द्विविधः नित्योऽनित्यश्च । तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः । यथा च्युतसंस्कृत्यादिः । अन्यादृशस्त्वनित्यः । यथाऽप्रयुक्तादिः ।'. च्युतसंस्कृति may be instanced in the use of नाथते in the sense of 'requests' for नाथति (which is the correct form in that sense). अप्रयुक्त is the employment of a word, which, though authorized, is not used by poets *e. g.* the word दैवत, which, the lexicons say, is both masculine and neuter, is used by poets only in the neuter; if one were to employ दैवतः in a poem, it would be अप्रयुक्तदोष. ध्वनिकृता—By the author of Dhvani i. e. the work called ध्वन्यालोक. The author's name is Ānandavardhana, who flourished in the latter half of the 9th century A. D. in Kashmir. Construe अनित्या दोषाश्च ये श्रुतिदुष्टादयो दर्शिताः ते ध्वन्यात्मन्येव शृङ्गारे हेया इत्युदाहृताः ॥. See ध्वन्यालोक pp. 82-83 (Nir). ध्वन्यात्मन्येव शृङ्गारे means अङ्गित्वेन व्यङ्ग्ये शृङ्गारे एव

# Appendix B.

( The Kárikás occurring in the text. )

## प्रथमः परिच्छेदः

शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी । अपहृत्य तमः सन्ततमर्थानखिलान्प्रकाशयतु ॥
चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि । काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥
वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः । उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥

## द्वितीयः परिच्छेदः

वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः । वाक्योच्चयो महावाक्यमित्थं वाक्यं द्विधा मतम् ॥
वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः । अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥
वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः । व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥
तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा । सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥
मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते । रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥
मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये । स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥
अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये । उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥
आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा । विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ॥
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका । सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ॥
सादृश्यात्तु मता गौण्यस्तेन षोडश भेदिताः । व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः ॥
धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा । तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥
पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा । विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ॥
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च । अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥
अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते । एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥
लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् । यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया ॥
वक्तृबोद्धव्यवाक्यानामन्यसंनिधिवाच्ययोः । प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ॥
वैशिष्ट्यादन्यमर्थं या बोधयेत्सार्थसम्भवा । त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥
शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः । एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥
अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः । शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥
तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने । तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे ॥

## दशमः परिच्छेदः ( अर्थालङ्काराः )

साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ॥
सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च । उपमेयं चोपमानं भवेद्वाच्यमियं पुनः ॥
श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि । आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ॥
द्वे तद्धिते समासेऽथ वाक्ये पूर्णा षडेव तत् । लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ॥
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् । पूर्णावद्धर्मलोपे सा विना श्रौतीं तु तद्धिते ॥
आधारकर्मविहिते द्विविधे च क्यचि क्यङि । कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ॥
उपमानानुपादाने द्विधा वाक्यसमासयोः । औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ॥

# Appendix D.

( The pages refer to the Notes )

## General Index.

# Appendix E.

तृतीयः परिच्छेदः ।

अथ कोऽयं रस इति । उच्यते—

> विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
> रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ॥ १ ॥

विभावादयो वक्ष्यन्ते । सात्त्विकाश्चानुभावरूपत्वान्न पृथगुक्ताः । व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसः । न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते । तदुक्तं लोचनकारैः (ध्व. पृ. ६९)—'रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद्व्यवहारः' इति । अत्र च रत्यादिपदोपादानादेव स्थायित्वे प्राप्ते पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम् । ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव । तदुक्तम्—'रसावस्थः परं भावः स्थायितां प्रतिपद्यते' इति ।

अस्य स्वरूपकथनगर्भमास्वादनप्रकारः कथ्यते—

> सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
> वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥ २ ॥
> लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।
> स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥ ३ ॥
> रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते ।

इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वं तस्योद्रेको रजस्तमसी अभिभूयाविर्भावः । तत्र हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् । अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः । अत्र हेतुं वक्ष्यामः । स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या । चिन्मय इति स्वरूपार्थे मयट् । चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः । तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम् । तदाह धर्मदत्तः स्वग्रन्थे—
'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते । तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः । तस्मादद्भुतमेवाह कृती नारायणो रसम् ॥' इति ।

कैश्चिदिति प्राक्तनपुण्यशालिभिः । यदुक्तम्—'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम् ।' इति । यद्यपि 'स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः' (दशरूपक ४.३) इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वम्, तथापि 'रसः स्वाद्यते' इति काल्पनिकं भेदमुररीकृत्य कर्मकर्तरि वा प्रयोगः । तदुक्तम्—'रस्यमानतामात्रसारत्वात्प्रकाशशरीरादनन्य एव हि रसः' इति । एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगो वेद्यः । तन्नेतावता रसस्याविषयत्वमुक्तं भवति । व्यञ्जनायाश्च ज्ञानविशेषत्वाद् द्वयोरैक्यमापतितम् । ततश्च—

---

१ 'स्थायी भावः' क-ख-ङ. २ 'रतो व्यक्तो व्यक्तीकृत एव' ख-ग. ३ 'प्राप्ते स्थायित्वे' ख-क-ग. ४ '°स्थायित्वप्रतिपादनार्थम्' क. ५ 'प्रकाशसुख०' क-ङ. ६ 'धर्मदत्तो' क. ७ 'तस्मादद्भुत०' क-ग. ८ 'भेदेन ज्ञेयः' ख. ९ 'स्वदतीति' ख. १० 'ज्ञानविशेषत्वात्' क-ग.

क

'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्॥'

इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्येनैवेति कथं रसस्य व्यङ्ग्यतेति चेत्, सत्यमुक्तम्। अत एवाहुः—'विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः' इति। अत एव हि रसनास्वादनचमत्कारणादयो विलक्षणा एव व्यपदेशा इति। अभिधादिविलक्षणव्यापारमात्रप्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति।

ननु तर्हि करुणादीनां[2] रसानां दुःखमयत्वाद्रसत्वं न स्यादिति, उच्यते—

**करुणादावपि रसे जायते यत्परं सुखम्॥ ४॥**
**सचेतसामनुभवः प्रमाणं तत्र केवलम्।**

आदिशब्दाद्बीभत्सभयानकादयः। तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते—

**किं च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः॥ ५॥**

नहि कश्चित्सचेता आत्मनो दुःखाय प्रवर्तते। करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात्सुखमयत्वमेव। अनुपपत्त्यन्तरमाह—

**तथा रामायणादीनां भविता दुःखहेतुता।**

करुणरसस्य दुःखहेतुत्वे[6] करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुताप्रसङ्गः स्यात्। ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—

**हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्॥ ६॥**
**शोकहर्षादयो लोके जायन्तां नाम लौकिकाः।**
**अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्॥ ७॥**
**सुखं संजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः।**

ये खलु रामवनवासादयो लोके दुःखकारणानीत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यतां विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते। तेभ्यः सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च 'लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते' इति लोक एव प्रतिनियमः। काव्ये पुनः सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते इति नियमान्न कश्चिद्दोषः। कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इति। उच्यते—

**अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः॥ ८॥**

तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायत इत्याह—

---

१ 'व्यापारमात्र प्रसाधन०' ख. 'साधनग्रहिलै०' नि. २ 'करुणादीनां दुःखत्वात्' क-ग. ३ 'सचेताः' ख. ४ 'सुखमयत्वमेव' इति नास्ति ख-पुस्तके. ५ 'अनुपपत्त्यन्तर०' नि. ६ 'दुःखहेतुत्वात्' ख. ७ 'हेतुत्वं स्यात्' क-ग. ८ 'ये खलु वनवास०' नि. ९ 'एव नियमः' क-ग. १० 'इत्यत आह' नि.

न जायते तदास्वादो विना रत्यादिवासनाम् ।

वासना चेदानींतनी प्राक्तनी च रसास्वादहेतुः । तत्र यद्याद्या न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात् । यदि द्वितीया न स्यात्तदा यद्रागिणामपि केषांचिद्रसोद्बोधो न दृश्यते तन्न स्यात् । उक्तं च धर्मदत्तेन—'सवासनानां सभ्यानां रसस्यास्वादनं भवेत् । निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसंनिभाः ॥' इति ।

ननु कथं रामादिरत्याद्युद्बोधकारणैः सामाजिकरत्याद्युद्बोध इत्युच्यते—

व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः ॥ ९ ॥
तत्प्रभावेण यस्यासन्पाथोधिप्लवनादयः ।
प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ॥ १० ॥

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते—

उत्साहादिसमुद्बोधः साधारण्याभिमानतः ।
नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ॥ ११ ॥

रत्यादयोऽपि साधारण्येनैव प्रतीयन्त इत्याह—

साधारण्येन रत्यादिरपि तद्वत्प्रतीयते ।

रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् । परगतत्वेन त्वरस्यतापातः । विभावादयोऽपि प्रथमं साधारण्येन प्रतीयन्त इत्याह—

परस्य न परस्येति ममेति न ममेति च ॥ १२ ॥
तदास्वादे विभावादेः परिच्छेदो न विद्यते ।

ननु तथापि कथमलौकिकत्वमेतेषां विभावादीनामिति । उच्यते—

विभावनादिव्यापारमलौकिकमुपेयुषाम् ॥ १३ ॥
अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ।

आदिशब्दादनुभावनसंचारणे । तत्र विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनम् । अनुभावनमेवंभूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम् । संचारणं तथाभूतस्यैव तस्य सम्यक्चारणम् ।

विभावादीनां यथासंख्यं कारणकार्यसहकारित्वे कथं त्रयाणामपि रसोद्बोधे कारणत्वमित्युच्यते—

कार्यकारणसंचारिरूपा अपि हि लोकतः ॥ १४ ॥
रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ।

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इति । उच्यते—

प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ॥ १५ ॥
ततः संवलितः सर्वो विभावादिः सचेतसाम् ।
प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥ १६ ॥

---

१ 'प्राक्तनी चेदानींतनी' क. २ 'तदा' इति नास्ति ख-पुस्तके. ३ 'काष्ठकुड्याश्म०' क. ४ 'साधारण्येन प्रतीयन्ते' क-ग. ५ 'स्वात्मगतत्वेन' ख-पुस्तके. ६ '°रस्यतापत्तिः' क-ग. ७ 'न ममेति ममेति च' क-ग. ८ 'कथमेकमलौकिकत्वं तेषाम्' क-ग. ९ 'भूषणैतस्य' ख. १० 'कारणान्येव' ग. ११ 'कारणं कार्यसंचारिरूपा' ख.

यथा खण्डमरिचादीनां संमेलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे संजायते। विभावादिसंमेलनादिहापि तथेत्यर्थः।

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत्कथं तेषामेकस्य द्वयोर्वा सद्भावेऽपि स स्यादिति। उच्यते—

**सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।**
**झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ॥ १७ ॥**

अन्यसमाक्षेपश्च प्रकरणादिवशात्। यथा—

'दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।
मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली
छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥' ( मालवि. २-३ )

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णनेऽपि[२] सञ्चारिणामौत्सुक्यादीनामनुभावानां च नयनविस्तारादीनामौचित्यादेवाक्षेपः। एवमन्याक्षेपेऽप्यूह्यम्। अनुकार्यगतो रस इति वदतः प्रत्याह—

**पारिमित्याल्लौकिकत्वात्सान्तरायतया तथा।**
**अनुकार्यस्य रत्यादेरुद्बोधो न रसो भवेत् ॥ १८ ॥**

सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाटककाव्यदर्शनादेः सान्तरायश्च, तस्मात्कथं रसरूपतामियात्। रसस्यैतद्धर्मत्रयविलक्षणधर्मकत्वात्।

अनुकर्तृगतत्वं चास्य निरस्यति—

**शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम्।**
**दर्शयन्नर्तको नैव रसस्यास्वादको भवेत् ॥ १९ ॥**

किं च।

**काव्यार्थभावनेनायमपि सभ्यपदास्पदम्।**

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिस्वरूपतामात्मनो दर्शयेत्तदा सोऽपि सभ्यमध्य एव गण्यते।

**नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः ॥ २० ॥**

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति न ह्ययं तथा प्रतीतिमन्तरेणाभावात्।

**यस्मादेष विभावादिसमूहालम्बनात्मकः।**
**तस्मान्न कार्यः**

यदि रसः कार्यः स्यात्तदा विभावादिज्ञानकारणक एव स्यात्। ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन्। कारणज्ञानतत्कार्यज्ञानयोर्युगपददर्शनात्। नहि

---

१ 'संजायते रसः स्वादेन' इति क-ग. २ 'तथा' लि. ३ 'नापि' इति नास्ति ख-पुस्तके. ४ 'रत्यादिरुद्बोधो न रसो भवेत्' लि. ५ 'प्रकाशात्' ख. ६ 'रसस्य स्वादको' क-ग. ७ 'रामादिरत्या०' लि. ८ 'यस्मादेव' क-ग. ९ 'काव्यार्थभाव पुन०' लि.

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥ ३१ ॥**

स्पष्टम् । तत्र धीरोदात्तः—

**अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।**
**स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ ३२ ॥**

अविकत्थनोऽनात्मश्लाघाकरः । महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः । निगूढमानो विनयच्छन्नगर्वः । दृढव्रतोऽङ्गीकृतनिर्वाहकः । यथा—रामयुधिष्ठिरादिः ।

अथ धीरोद्धतः—

**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।**
**आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥ ३३ ॥**

यथा—भीमसेनादिः । अथ धीरललितः —

**निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।**

कला नृत्यादिका । यथा—रत्नावल्यादौ वत्सराजादिः । अथ धीरप्रशान्तः —

**सामान्यगुणैर्भूयान्द्विजादिको धीरशान्तः स्यात् ॥ ३४ ॥**

यथा—मालतीमाधवादौ माधवादिः ।

एषां च शृङ्गारित्वे[1] भेदानाह—

**एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा ।**

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः ।

**एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः ॥ ३५ ॥**

द्वयोस्त्रिचतुःप्रभृतिषु वा नायिकासु तुल्यानुरागो दक्षिणनायकः । यथा—

'स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
　र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः[2] प्रति मया विज्ञाय विज्ञापिते
　देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥'

**कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।**
**दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः ॥ ३६ ॥**

यथा मम—

'शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
　पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि ।
किञ्चित्तत्र विधातुमक्षमतया बाष्पं त्यजन्त्याः सखे
　ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥'

**अनुकूल एकनिरतः**

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । यथा—

'अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
　नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।

---

१ 'शृङ्गारादिविषये' लि.　२ '०सुन्दरी' ग.　३ [illegible] ( ५.७ [illegible] ) [illegible]

किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो[१] नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥' (शृङ्गार० १.२५)

शठोऽयमेकत्र बद्धभावो यः ।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥ ३७ ॥

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठनायकः । यथा—

'शठान्यस्याः[२] काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्क्वाचक्षे घृतमधुमयत्वद्बहुवचो
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥' ( अमरु० १०९ )

एषां च त्रैविध्यादुत्तममध्यमाधमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च ॥ ३८ ॥

एषामुक्तनायकभेदानाम् । अथ प्रसङ्गादेतेषां सहायानाह—

दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते[३] च ।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥ ३९ ॥

तस्य नायकस्य बहुव्यापिनि प्रसङ्गगतेतिवृत्तेऽनन्तरोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्दनामा सहायो भवति । यथा—रामादीनां सुग्रीवादयः ।

अथ शृङ्गारसहायाः—

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥ ४० ॥

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः । तत्र विटः—

सम्भोगहीनसम्पद्विटस्तु धूर्तः कलैकदेशज्ञः ।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥ ४१ ॥

चेटः प्रसिद्ध एव ।

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥ ४२ ॥

स्वकर्म भोजनादि । अथार्थचिन्तनसहायमाह—

मन्त्री स्यादर्थानां चिन्तायाम्

अर्थास्तन्त्रावापादयः । यत्तु सहायकथनप्रस्तावे 'मन्त्री स्वं चोभयं वापि सखा तस्यार्थचिन्तने' इति ( दश० २-४२ ) केनचिल्लक्षणं कृतम्, तदपि राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षयितव्यम् । न तु सहायकथनप्रस्तावे । 'नायकस्यार्थचिन्तने मन्त्री सहायः' इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात् । यदप्युक्तम् 'मन्त्रिणा ललितः

१ 'प्रियः' ग. २ 'शठान्यस्याः' ग. ३ '°वृत्ते तु' नि-क. ४ '°सङ्गगते इतिवृत्ते' नि-क. ५ 'वपुर्वेष°' ग; 'वपुर्वेष°' नि-क.

शेषा मन्त्रिस्वायत्तसिद्धयः' (दश० २.४३) इति, तदपि स्वलक्षणकथनेनैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम् । न चार्थचिन्तने तस्य मन्त्री सहायः । किं तु स्वयमेव निष्पादकः । तस्यार्थचिन्तनाद्यभावात् ।

अथान्तःपुरसहायाः—

तद्वदवरोधे ।

**वामनषण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः ॥ ४३ ॥**

**मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः ।**

**सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥ ४४ ॥**

आद्यशब्दान्मूकादयः । तत्र षण्डवामनकिरातकुब्जादयो यथा रत्नावल्याम्—

'नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥' (रत्ना० २.३)

शकारो मृच्छकटिकादिषु प्रसिद्धः । अन्येऽपि यथादर्शनं ज्ञेयाः । अथ दण्डसहायाः—

**दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ।**

दुष्टनिग्रहो दण्डः । स्पष्टम् । अथ धर्मसहायाः—

**ऋत्विक्पुरोहिताः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥ ४५ ॥**

ब्रह्मविदो वेदविदः, आत्मविदो वा । अत्र च

**उत्तमाः पीठमर्दाद्याः**

आद्यशब्दान्मन्त्रिपुरोहितादयः ।

**मध्यौ विटविदूषकौ ।**

**तथा शकारचेटाद्या अधमाः परिकीर्तिताः ॥ ४६ ॥**

आद्यशब्दात्ताम्बूलिकगान्धिकादयः ।

अथ प्रसङ्गाद्दूतानां विभागगर्भलक्षणमाह—

**निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।**

**कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥ ४७ ॥**

तत्र कार्यप्रेष्यो दूत इति लक्षणम् । तत्र—

**उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।**

**सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥ ४८ ॥**

उभयोरिति येन प्रेषितो यदन्तिके च प्रहितः ।

**मितार्थभाषी कार्यस्य सिद्धकारी मितार्थकः ।**

**यावद्भाषितसन्देशहारी सन्देशहारकः ॥ ४९ ॥**

अथ सात्त्विका नायकगुणाः—

---

१ 'मन्त्रिस्वायत्त' नि-ब. २ 'लक्षितस्य' इत्येतन्नास्ति ग-ङ-पुस्तकयोः. ३ 'संयुतः' नि-ब. ४ 'अत्र...वा' इत्येतन्नास्ति नि-पुस्तके.

**शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी ।**
**ललितौदार्यमित्यष्टौ सात्त्विकाः पौरुषा गुणाः ॥ ५० ॥**

तत्र

**शूरता दक्षता सत्त्वं महोत्साहोऽनुरागिता ।**
**नीचे घृणाधिके स्पर्धा यतः शोभेति तां विदुः ॥ ५१ ॥**

तत्रानुरागिता यथा—

'अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥' ( रघु ८.८ )

एवमन्यदपि । अथ विलासः—

**धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ।**

यथा—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमेत्युत दर्प एव ॥'
( उत्तररामे० ६.१९ )

**संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम् ॥ ५२ ॥**

ऊह्यमुदाहरणम् ।

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता ।**

यथा—

'आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥'

**व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ॥ ५३ ॥**

यथा—

'श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥' ( कुमार० ३.४० )

**अधिक्षेपाद्यमानादेः प्रयुक्तस्य परेण यत् ।**
**प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ५४ ॥**
**वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।**
**दानं सप्रियभाषणमौदार्यं शत्रुमित्रयोः समता ॥ ५५ ॥**

यथास्वमुदाहरणान्यूह्यानि ।

**अथ नायिका त्रिभेदा स्वान्या साधारणी स्त्रीति ।**
**नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता ॥ ५६ ॥**

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति । सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा । तत्र स्वस्त्री—

**विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।**

---

१ 'भीशोक...विकारता' इत्येतत् ख-ग-पुस्तकयोः 'भय...भवन्ति' [illegible]
२ इयं कारिका (१.५) [illegible]

यथा—

'लज्जापज्जत्तपसाहणाइं परभत्तिणिप्पिवासाइं ।
अविणअदुम्मेहाइं धण्णाण घरे कलत्ताइं ॥' (लज्जापर्याप्तप्रसाधनानि पर-भर्तृनिष्पिपासानि । अविनयदुर्मेधांसि धन्यानां गृहे कलत्राणि ॥)

**सापि कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति ॥ ५७ ॥**

तत्र—

**प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ ५८ ॥**

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्—

'मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दता
दूरं यात्युदरं च रोमलतिका नेत्रार्जवं धावति ।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-
दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥'

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये—

'दत्ते सालसमन्थरं भुवि पदं, निर्याति नान्तःपुरात्,
नोद्दामं हसति, क्षणात्कलयते ह्रीयन्त्रणां कामपि ।
किंचिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम् ॥'

रतौ वामा यथा—

'दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता,
शय्यायां परिवृत्य तिष्ठति, बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया ॥' (नागा० ३·४)

माने मृदुर्यथा—

'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥' (अमरु० २९)

समधिकलज्जावती यथा—'दत्ते सालसमन्थरम्—' इत्यत्र श्लोके । अत्र समधिकलज्जा-वत्त्वेनापि लब्धाया रतौ वामताया विच्छित्तिविशेषवत्तया पुनः कथनम् । अथ मध्या—

**मध्या विचित्रसुरता प्ररूढस्मरयौवना ।**
**ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥ ५९ ॥**

विचित्रसुरता यथा—

---

१ 'परभत्तिणिप्पि०' ख; 'परत्ति' ग; 'परचिन्तानिप्पि०' ख. २ दशरूपके (२.१५ इत्यत्र) धनञ्जयस्य. ३ 'मुखायमानेषु' लि-ख. ४ '०कपोलपालि०' ग. ५ 'लम्बालकैरश्रुभिः' ख-ग. ६ 'यथा' ग.

'कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथास्याः ॥'

( शृङ्गारतिलक १.२९ )

प्ररूढस्मरा यथात्रैवोदाहरणे । प्ररूढयौवना यथा मम—

'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्धिनी
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा ॥'[1]

एवमन्यत्रापि । अथ प्रगल्भा—

**स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।**
**भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ॥ ६० ॥**

स्मरान्धा यथा—

'धन्यासि या कथयसि प्रियसङ्गमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥'[2]

गाढतारुण्या यथा—

'अभ्युन्नतस्तनमुरो नयने सुदीर्घे वक्रे भ्रुवावतितरां वचनं ततोऽपि ।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो मन्दा गतिः किमपि चाद्भुतयौवनायाः ॥'

( धनिकस्य दश० २.१८ )

समस्तरतकोविदा यथा—

'क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥' ( अमरु० २०७ )

भावोन्नता यथा—

'मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितैस्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥'

( शृङ्गार० १.४२ )

दरव्रीडा यथा— 'धन्यासि या कथयसि—' इत्यत्रैव । आक्रान्तनायका यथा—

'स्वामिन्भङ्गुरयालकं, सतिलकं भालं विलासिन्कुरु,
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय ।[3]
इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥' (शृङ्गार. १.४२)

मध्याप्रगल्भयोर्भेदान्तराण्याह—

**ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ।**

ते मध्याप्रगल्भे । तत्र—

---

१ 'सान्द्रा' लि. २ शार्ङ्गधरपद्धतौ श्लोकोऽयं 'विज्जकायाः' इति दृश्यते (३७७६); सुभाषितावलावपि श्लोकोऽयमुपलभ्यते ( २१४४ ). ३ 'तव योजय' क्व-ख.

'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने[1] निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥' ( अमरु० १९ )

**मध्याप्रगल्भयोर्भेदास्तेन द्वादश कीर्तिताः।**
**मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥ ६५ ॥**
**परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।**

तत्र

**यात्रादिनिरतान्योढा कुलटा गलितत्रपा ॥ ६६ ॥**

यथा—

'[2]स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः,
श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः।
तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते,
वैदग्धीमधुरप्रबन्धरसिक, व्यर्थोऽयमत्र श्रमः ॥'

अत्र हि मम परिणेत्राच्छादनादिदातृतया स्वामीव । न तु वल्लभः । त्वं तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परकामुकविषया रतिः प्रतीयते।

**कन्या त्वजातोपयमा सलज्जा नवयौवना।**

अस्याः पित्राद्यायत्तत्वात्परकीयात्वम्। यथा मालतीमाधवादौ मालत्यादिः।

**धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥ ६७ ॥**
**निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।**
**वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥ ६८ ॥**
**काममङ्गीकृतमपि परिक्षीणधनं नरम्।**
**मात्रा निष्कासयेदेषा पुनः सन्धानकाङ्क्षया ॥ ६९ ॥**
**तस्कराः पण्डका[3] मूर्खाः सुखप्राप्तधनास्तथा।**
**लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥ ७० ॥**
**एषापि मदनायत्ता क्वापि सत्यानुरागिणी।**
**रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥ ७१ ॥**

पण्डको वातपाण्ड्वादिः । छन्नं[4] प्रच्छन्नं ये कामयन्ते ते छन्नकामाः । तत्र रागहीना यथा लटकमेलकादौ मदनमञ्जर्यादिः । रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः । पुनश्च—

**अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः।**
**स्वाधीनभर्तृका तद्वत्खण्डिताथाभिसारिका ॥ ७२ ॥**

---

१ 'नयने निमील्य' ख–ग. २ अयं श्लोकः शार्ङ्गधरपद्धतौ दृश्यते ( ३७०६ ) तत्र तु 'वैदग्धी-मधुरप्रबन्धचतुर' इति पाठः. ३ 'पुण्डकाः' ख–ग. ४ 'प्रच्छन्नं ये कामयन्ते ते छन्नकामाः पुण्डको वातपुण्ड्रकादिः' ख–ग.

कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥ ७३ ॥

तत्र—

कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ॥ ७४ ॥

यथा—'अस्माकं सखि वाससी—' इत्यादि ( शृङ्गार० १.२५ ) ।

पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥ ७५ ॥

यथा—'तदवितथमवादीः—' इत्यादि ( शिशु० १.३३ ) ।

अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ॥ ७६ ॥

क्रमाद्यथा—

'न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति सन्दिदिशे ॥' ( शिशु० ९.५६ )

'उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥'

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाभिसरेद्यदि ॥ ७७ ॥
विचित्रोज्ज्वलवेषा तु रणन्नूपुरकङ्कणा ।
प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद्यदि ॥ ७८ ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसञ्चारा स्यात्प्रेष्याभिसरेद्यदि ॥ ७९ ॥

तत्राद्ये 'उत्क्षिप्तं—' इत्यादि । अन्ययोरूह्यमुदाहरणम् । प्रसङ्गादभिसारस्थानानि कथ्यन्ते—

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
मालामञ्चः[1] श्मशानानि नद्यादीनां तटी तथा ॥ ८० ॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रये[2] ॥ ८१ ॥
चाटुकारमपि[3] प्राणनाथं रोषादपास्य या ।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥ ८२ ॥

यथा मम तातपादानाम्—

'नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः
कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः ।

---

१ 'मालाञ्चः' नि; मालञ्च न' ब. २ 'श्रये' नि. ३ 'चाटुकार' नि-ब.

पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥'

**प्रियः कृत्वापि संकेतं यस्या नायाति संनिधिम् ।**
**विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥ ८३ ॥**

यथा—

'उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः ।
यातः परमपि जीवेज्जीवितनाथो भवेत्तस्याः ॥' (दशरू० २.२६)

**नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः ।**
**सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका ॥ ८४ ॥**

यथा—

'तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥' (मेघ० उत्तर. १६)

**कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।**
**सा तु वासकसज्जा[1] स्याद्विदितप्रियसंगमा ॥ ८५ ॥**

यथा राघवानन्दानां[2]—

'विदूरे केयूरे कुरु, करयुगे रत्नवलयैरलं, गुर्वी ग्रीवाभरणलतिकेयं, किमनया ।
नवामेकामेकावलिमयि मयि त्वं विरचयेर्न[3] पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ ॥'

**आगन्तुं कृतचित्तोऽपि दैवान्नायाति चेत्प्रियः ।**
**तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥ ८६ ॥**

यथा—

'किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥'[4] (शृङ्गार. १.७५)

**इति साष्टाविंशतिशतमुत्तममध्यमाधमस्वरूपतः ।**
**चतुरधिकाशीतियुतं शतत्रयं नायिकाभिदानां[5] स्यात् ॥ ८७ ॥**

'इह च परकीये कन्यकान्योढे संकेतात्पूर्वं विरहोत्कण्ठिते । पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके । कुतोऽपि संकेतमप्राप्ते नायके विप्रलब्धे । इति त्र्यवस्थैवानयोः । अस्वाधीनप्रिययोरवस्थान्तरायोगात् ।'[6] इति कश्चित् ।

**क्वचिदन्योन्यसाङ्कर्यमासां लक्ष्येषु दृश्यते ।**

यथा—

---

१ 'नानाप्रान्ता' ग. २ 'राघवानन्दानां नाटके' लि-क. ३ 'न नेपथ्यं पथ्यम्' लि. ४ '°दुःखमनतो[illegible]' लि. ५ 'नायिकाभेदाः' लि. ६ 'संकेतस्थानगते' लि-क.

'न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै भवतु[1] यतः सदृशोश्चिराय योगः ॥'
'तव कितव किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥'[2]
'मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ कलिरेव महांस्त्वयाद्य दत्तः ॥'
'इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥' (शिशु० ७.५३-५६)

इयं हि वक्रोक्त्या रोषवचनेन कर्णोत्पलताडनेन च धीरमध्यताधीरमध्यताधीर-प्रगल्भताभिः संकीर्णेति । अन्यत्राप्येवमूह्यम् ।

इतरा अप्यसंख्यातास्ता नोक्ता विस्तरशङ्कया ॥ ८८ ॥

ता नायिकाः । अथासामलङ्काराः—

यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥ ८९ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ॥ ९० ॥
लीला विलासो विच्छित्तिर्बिब्बोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ९१ ॥
विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥ ९२ ॥
स्वभावजाः स्युर्भावाद्या दश पुंसां भवन्त्यपि ।

पूर्वे भावादयो धैर्यान्ता दश नायकानामपि सम्भवन्ति । किं तु सर्वेऽप्यमी नायिकाश्रया एव विच्छित्तिविशेषं पुष्णन्ति । तत्र भावः—

निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ ९३ ॥

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः । यथा—

'स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किं तु मनोऽन्यदिव दृश्यते ॥'

अथ हावः—

भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥ ९४ ॥

यथा—

'विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥' (कुमार० ३.६८)

अथ हेला—

---

१ 'भवति' लि–च. २ अयं श्लोकः ख–ग–घ–पुस्तकेषु नास्ति. ३ 'मध्यां' लि–च. ४ 'प्रगल्भताभ्यामुक्तम्' लि–च.

**हेलात्यन्तसमालक्ष्यविकारः स्यात्स एव तु ।**

स एव भाव एव । यथा—

'तह से झत्ति पउत्ता वहूए सव्वङ्गविब्भमा सअला ।
संसइअमुद्धभावा होइ चिरं जह सहीण पि ॥' ( तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमाः सकलाः । संशयितमुग्धभावा भवति चिरं यथा सखीनामपि ॥)

अथ शोभा—

**रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ॥ ९५ ॥**
**शोभा प्रोक्ता**

तत्र यौवनशोभा यथा—

'असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥' ( कुमार० १.३१)

एवमन्यत्रापि । अथ कान्तिः—

**सैव कान्तिर्मन्मथाप्यायितद्युतिः ।**

मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते ।

यथा—'नेत्रे खञ्जनगञ्जने—'[1] इत्यादि । अथ दीप्तिः—

**कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ ९६ ॥**

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्—

'तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः ।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥'

अथ माधुर्यम्—

**सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ।**

यथा—

'सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'
( शाकु० १.१७ )

अथ प्रगल्भता—

**निःसाध्वसत्वं प्रागल्भ्यम्**

यथा—

'समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दशनैः कान्तं दासीकुर्वन्ति योषितः ॥'

अथौदार्यम्—

**औदार्यं विनयः सदा ॥ ९७ ॥**

यथा—

---

१ इदं पद्यं धनिकस्यैवेति तेन दशरूपकव्याख्याने ( २.३४ ) उक्तम्.

'न ब्रूते परुषां गिरं, वितनुते न भ्रूयुगं भङ्गुरं,
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि ।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभि प्रयच्छति परं पर्यश्रुणी लोचने ॥'

अथ धैर्यम्—

**मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ।**

यथा—

'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥' ( मालती० २.२ )

अथ लीला—

**अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि ॥ ९८ ॥**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।**

यथा—

'मृणालव्यालवलया वेणीबन्धकपर्दिनी ।
हरानुकारिणी पातु लीलया पार्वती जगत् ॥'

अथ विलासः—

**यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ॥ ९९ ॥**
**विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ।**

यथा—

'अत्रान्तरे किमपि वाग्विभवातिवृत्तवैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्यमाचार्यकं विजयि मान्मथमाविरासीत् ॥'
( मालती० १.२९ )

अथ विच्छित्तिः—

**स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ।**

यथा—

'स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठस्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासस्तु प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न शून्यः ॥'
( शिशु० ८.७० )

अथ बिब्बोकः—

**बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ १०० ॥**

यथा—

---

१ 'विविक्त०' क.

'बाला सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
या प्राणेश्वरवर्जने न पुनः सम्पूर्णदृष्टि प्रिये ।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते[3] ॥'

अथ किलकिञ्चितम्—

**स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।**
**साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात् ॥ १०१ ॥**

यथा—

'पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥' (शिशु० १०.६१)

अथ मोट्टायितम्—

**सद्भावभाविते चित्ते वल्लभस्य कथादिषु ।**
**मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥ १०२ ॥**

यथा—

'सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा ।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना ॥'

अथ कुट्टमितम्—

**केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात् ।**
**प्राहुः कुट्टमितं नेति[6] शिरःकरविधूननम् ॥ १०३ ॥**

यथा—

'पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।
पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥' ( शिशु० १०.५३ )

अथ विभ्रमः—

**त्वरया हर्षरागादेर्दयितागमनादिषु ।**
**अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ॥ १०४ ॥**

यथा—

'श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥'

अथ ललितम्—

**सुकुमारतयाङ्गानां विन्यासो ललितं भवेत् ।**

यथा—

'गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥' (शिशु० ७.१८)

---

१ 'प्राणान्तरम्' ग. २ 'प्रसीदन्तु' ख-ग. ३ शार्ङ्गधरपद्धतौ श्लोकोऽयं लभ्यते (३०७९). ४ 'सुखेऽपि' ग. ५ 'तद्भाव०' लि-च. ६ 'नाम' लि-च. ७ [illegible] विभाव्यते (३.२९). ८ 'सललित०' लि-च.

अथ मदः[1]—

**मदो विकारः सौभाग्ययौवनाद्यवलेपजः ॥ १०५ ॥**

यथा—

'मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशीनां वैरी न चेद्भवति वेपथुरन्तरायः ॥'[2]

अथ विहृतम्[3]—

**वक्तव्यकालेऽप्यवचो व्रीडया विहृतं[4] मतम् ।**

यथा—

'दूरागतेन कुशलं पृष्टा नोवाच सा मया किंचित् ।
पर्यश्रुणी तु नयने तस्याः कथयांबभूवतुः सर्वम् ॥'

अथ तपनम्—

**तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितम् ॥ १०६ ॥**

यथा मम—

'श्वासान्मुञ्चति, भूतले विलुठति, त्वन्मार्गमालोकते,
दीर्घं[5] रोदिति, विक्षिपत्यत इतः क्षामां भुजावल्लरीम् ।
किं च, प्राणसमान, काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥'

अथ मौग्ध्यम्—

**अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः ।**
**वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ १०७ ॥**

यथा—

'के द्रुमास्ते क वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥'

अथ विक्षेपः—

**भूषाणामर्धरचना मिथ्या विष्वगवेक्षणम् ।**
**रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ १०८ ॥**

यथा—

'धम्मिल्लमर्धमुक्तं कलयति तिलकं तथासकलम् ।
किंचिद्वदति रहस्यं चकितं विष्वग्विलोकयते तन्वी ॥'

अथ कुतूहलम्—

**रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।**

यथा—

'प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥' (कुमार. ७.५८; रघु. ७.७)

---

१ 'मद्' नि-ब. २ दशरूपके ( २.३४ इत्यत्र ) उद्धृतमिदम्. ३ 'विहृतम्' ख-ग. ४ 'विहृतं' ख-ग. ५ 'दीर्घं' नि-ब.

अथ हसितम्—

हसितं तु वृथाहासो यौवनोद्भेदसम्भवः ॥ १०९ ॥

यथा—

'अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति ॥'

अथ चकितम्—

कुतोऽपि दयितस्याग्रे चकितं भयसंभ्रमः ।

यथा—

'त्रस्यन्ती चलशफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतोर्लीलाभिः किमु सति कारणे तरुण्यः ॥'
(शिशु० ८.२४)

अथ केलिः—

विलासे[1] सह कान्तेन क्रीडितं केलिरुच्यते ॥ ११० ॥

यथा—

'व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥' (किरात० ८.१९)

अथ मुग्धाकन्यकयोरनुरागेङ्गितानि—

दृष्ट्वा दर्शयति व्रीडां संमुखं नैव पश्यति ।
प्रच्छन्नं वा भ्रमन्तं वातिक्रान्तं पश्यति प्रियम् ॥ १११ ॥
बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी ।
सगद्गदस्वरं किञ्चित्प्रियं प्रायेण भाषते ॥ ११२ ॥
अन्यैः प्रवर्तितां शश्वत्सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥ ११३ ॥

अथ सकलानामपि नायिकानामनुरागेङ्गितानि—

चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथं चास्य न गच्छत्यनलंकृता ॥ ११४ ॥
क्वापि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् ॥ ११५ ॥
आनन्दयति[2] वाचाद्यैः प्रियस्य परिचारकान् ।
विश्वसित्यस्य मित्रेषु बहु मानं करोति च ॥ ११६ ॥
सखीमध्ये गुणान्ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥ ११७ ॥
स्थिता दृष्टिपथे शश्वत्प्रिये पश्यति दूरतः ।
आभाषते परिजनं संमुखं स्मरविक्रियम् ॥ ११८ ॥

---

१ 'विहारे' नि-च. २ 'आह्लादयति' नि-ख.

'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥' ( शान्ति० १५३.११,६५)

इति निशि जम्बुकस्य गोमायोर्दिवसे परित्यागोऽनभिमत इति वाक्यसमूहेन द्योत्यते । अत्र स्वतःसम्भवी व्यञ्जकः । एवमन्येष्वेकादशभेदेषूदाहार्यम् । एवं वाच्यार्थस्य व्यञ्जकत्वे उदाहृतम् ।

लक्ष्यार्थस्य यथा—'निःशेषच्युतचन्दनम्—' इत्यादि । व्यङ्ग्यार्थस्य यथा—'उअ णिच्चल—' इत्यादि । अनयोः स्वतःसम्भविनोर्लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ । एवमन्येष्वेकादशभेदेषूदाहार्यम् ।

पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः ।

असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः । तत्र पदांशः[3] प्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः । यथा—

'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥' (शा० १.२०)

अत्र 'हताः' इति न पुनः 'दुःखं प्राप्तवन्तः' इति हन्प्रकृतेः ।

'मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥' (शा० ३.२२)

अत्र 'तु' इति निपातस्यानुतापव्यञ्जकत्वम् ।

'न्यक्कारो ह्ययमेव मे यदरयः—' इत्यादौ 'अरयः' इति बहुवचनस्य, 'तापसः' इत्येकवचनस्य, 'अत्रैव' इति सर्वनाम्नः, 'निहन्ति' इति 'जीवति' इति च तिङः, 'अहो' इत्यव्ययस्य, 'ग्रामटिका' इति कप्रत्ययतद्धितस्य, 'विलुण्ठन' इति व्युपसर्गस्य, 'भुजैः' इति बहुवचनस्य व्यञ्जकत्वम् ।

'आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमधुना यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि[6] ॥'

अत्र[5] 'आहारे' इति विषयसप्तम्याः, 'समस्त' इति 'परा' इति च विशेषणस्य, 'मौनं चेदम्' इति प्रत्यक्षपरामर्शिनः सर्वनाम्नः, 'आभाति' इत्युपसर्गस्य, 'सखि' इति प्रणयसंस्मारणस्य, 'असि भोः' इति सोपहासोत्प्रासस्य, 'किं वा' इत्युत्तरपक्ष-

---

१ श्रीमन्महाभारते बहवः पाठभेदाः. २ 'असंलक्ष्य...ध्वनिरत्र पदांशकः' इति कारिकार्धं ख-पुस्तके. ३ 'पदांशप्रकृतिप्रत्यय' लि. ४ इदं सुभाषितावलौ (३४०५) शार्ङ्गधरपद्धतौ (३३३६) चोद्धृतम्. शार्ङ्गधरपद्धतौ रामचन्द्रस्येदमिति कथितम्. ५ 'अत्र तु आहारे इति' लि-ख. ६ 'मलयभवा°' लि.

तादर्थ्यद्योतकस्य चतुर्थ्यन्तस्य, 'अस्ति' इति वर्तमानोपदेशस्य तद्विधिपरत्वव्यञ्जकत्वं सहृदयसंवेद्यम्।

वर्णरचनयोरुदाहरिष्यते। प्रबन्धे यथा—महाभारते शान्तः। रामायणे करुणः। मालतीमाधवरत्नावल्यादौ शृङ्गारः। एवमन्यत्र।

**तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ॥ ११ ॥**
**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।**
**वेदखाग्निशराः (५३०४) शुद्धैरिषुबाणाग्निसायकाः (५३५५) ॥१२॥**

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेनेत्यर्थः। दिङ्मात्रमुदाह्रियते—

'अत्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय।
सा पूर्णकुम्भनवनीरजतोरणस्रक्सम्भारमङ्गलमयत्नकृतं विधत्ते ॥'

अत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नीरजतोरणस्रज इति रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः।

'धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि।
निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि ॥'

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः।

अथ गुणीभूतव्यङ्ग्यम्—

**अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये।**

अपरं काव्यम्। अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति।

**तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम् ॥ १३ ॥**
**सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्।**
**व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥ १४ ॥**

इतरस्य रसादेरङ्गं रसादिव्यङ्ग्यम्। यथा—

'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥' (महाभारते स्त्रीपर्वणि २४.१९)

अत्र शृङ्गारः करुणस्याङ्गम्।

'मानोन्नतां प्रणयिनीमनुनेतुकामस्त्वत्सैन्यसागररवोद्गतकर्णतापः।
हा हा कथं नु भवतो रिपुराजधानीप्रासादसन्ततिषु तिष्ठति कामिलोकः ॥'

अत्रौत्सुक्यत्राससन्धिसंस्कृतस्य करुणस्य राजविषयरत्यङ्गभावः।

'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।

---

१ 'चतुर्थ्यन्तस्य' ख–ग. २ 'वेदखाग्नि···योजनेनेत्यर्थः' इति नास्ति ख–ग–पुस्तकयोः. ३ 'नीरज तोरणस्रक्' ख–ग; 'तोरणवरस्रक्' इत्यपि पाठः अदर्शि ख–पुस्तके. ४ 'दृष्टय एव नवनीरजस्रज' नि–ध.

कृतावज्ञामन्तुर्वदनपरिवादीपुषटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥[1]

अत्र रामत्वं मया प्राप्तमित्यभिधानेऽपि शब्दशक्त्यैव रामत्वमेवगम्यते । वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम् । तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाङ्गतां नीतम् । काक्वाक्षिप्तं यथा—

'मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥'
(वेणी० १.१५)

अत्र मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम् ।

'दीपयन्रोदसीरन्ध्रमेष ज्वलति सर्वतः ।
प्रतापस्तव राजेन्द्र वैरिवंशदवानलः ॥'

अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दवानलत्वारोपसिद्ध्यङ्गम् ।

'हरस्तु किंचित्परिवृत्त—' (कुमार० ३-६७) इत्यादौ विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः ।

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥' (महावीर० २.१०)

अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

'सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।
अल्लावदीननृपतौ न सन्धिर्न च विग्रहः ॥'

अत्राल्लावदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपाय इति व्यङ्ग्यं व्युत्पन्नानामपि स्फुटतरम् ।

'अनेन लोकगुरुणा सतां धर्मोपदेशिना ।
अहं व्रतवती स्वैरमुक्तेन किमतः परम् ॥'

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्यग्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम् ।

'वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहुए सीअन्ति अंगाइं ॥'

( वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि)

अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् 'सीदन्त्यङ्गानि' इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम् ।

किं च । यो दीपकतुल्ययोगितादिषूपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव । काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् । तदुक्तं ध्वनिकृता—

---

१ क्षेमेन्द्रकृते कविकण्ठाभरणे ( पञ्चमे सन्धौ ) मदुदाहृतमेतत् पद्यमिदमिति प्रदर्शितम्. २ 'रामत्वं प्राप्त०' लि-ख. ३ 'रामत्वस्याभिधान०' क. ४ '०तादात्म्यारोपित्व०' ग; '०तादात्म्यारोपितता०' ख. ५ 'तेनाव्यं' ग. ६ 'दानमानादि' ग. ७ ध्वन्यालोके द्वितीयोद्योते ( २.३१ ) काव्यप्रकाशे पञ्चमोल्लासे च.

## पञ्चमः परिच्छेदः ।

अथ केयमभिनवा व्यञ्जना नाम वृत्तिरिति, उच्यते—

**वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम् ।**
**अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम् ॥ १ ॥**

अभिधायाः संकेतितार्थमात्रबोधनविरताया न वस्त्वलङ्काररसादिव्यङ्ग्यबोधने क्षमत्वम् । न च संकेतितो रसादिः । न हि विभावाद्यभिधानमेव तदभिधानम्, तस्य तदेकरूपत्वानङ्गीकारात् । यत्र च स्वशब्देनाभिधानं तत्र प्रत्युत दोष एवेति वक्ष्यामः । क्वचिच्च 'शृङ्गाररसोऽयम्' इत्यादौ स्वशब्दाभिधानेऽपि न तत्प्रतीतिः, तस्य स्वप्रकाशानन्दरूपत्वात् । अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्या वृत्तिरपि संसर्गमात्रबोधने परिक्षीणा[1] नैव व्यङ्ग्यस्य बोधिनी । यच्च केचिदाहुः[2]—'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः'[3] इति, यच्च धनिकेनोक्तम्[4]—

'तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम् ॥'[5] इति

तयोरुपरि 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति[6] विरम्यव्यापाराभाववादिभिरेव पातनीयो दण्डः ।

एवं च किमिति लक्षणाप्युपास्या । दीर्घदीर्घतराभिधाव्यापारेणापि[7] तदर्थबोधसिद्धेः । किमिति च 'ब्राह्मण, पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादावपि हर्षशोकादीनामपि न वाच्यत्वम्[8] । यत्पुनरुक्तं "पौरुषेयमपौरुषेयं च सर्वमेव वाक्यं कार्यपरम्, अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत्; ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्तिविषययोः प्रयोजनानुपलब्धेर्निरतिशयसुखास्वाद एव कार्यत्वेनावधार्यते[9] । 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्" इति ।

तत्र प्रष्टव्यम्—किमिदं तत्परत्वं[10] नाम, तदर्थत्वं वा, तात्पर्यवृत्त्या बोधकत्वं[11] वा । आद्ये न विवादः । व्यङ्ग्यत्वेऽपि तदर्थतानपायात् । द्वितीये तु—केयं तात्पर्याख्या वृत्तिः । अभिहितान्वयवादिभिरङ्गीकृता वा तदन्या वा । आद्ये दत्तमेवोत्तरम् । द्वितीये तु—नाममात्रे विवादः । तन्मतेऽपि तुरीयवृत्तिसिद्धेः ।

नन्वस्तु युगपदेव तात्पर्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनम्—इति चेत्, न । तयोर्हेतुफलभावाङ्गीकारात् । यदाह मुनिः—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । सहभावे च कुतः सव्येतरविषाणयोरिव कार्यकारणभावः । पौर्वापर्यविपर्ययात्[12] ।

---

१ 'संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी' लि-ब. २ केचिल्लोल्लटादयः. ३ 'दीर्घदीर्घो व्यापार इति' क-ग. ४ 'धनिकोक्तं' ग; 'धनिकेनोक्तं' ब. ५ धनिकेन दशरूपकव्याख्याने (४.३७) अवलोकाख्यनिबन्धनाद् न कारिका उदाहृताः; नैषैका कारिका किन्तु भिन्ने एव कारिकार्धे. ६ 'इति वादिभिरेव' लि-ब. ७ 'दीर्घाभिधा' क-ग. ८ 'वाच्यत्वं' लि-ब. ९ 'काव्यशब्दानां निरतिशयसुखास्वाद एव कार्यत्वेनावधार्यते' क-ग. १० 'तत्परत्वं' लि-ब. ११ 'तद्बोधकत्वं' लि-ब. १२ 'पौर्वापर्यविपर्ययात्' इत्येतन्नास्ति ग-पुस्तके.

'गङ्गायां घोषः' इत्यादौ तटाद्यर्थमात्रबोधनविरताया लक्षणायाः कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता ? तेन तुरीया वृत्तिरुपास्यैवेति निर्विवादमेतत् । किं च—

**बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम् ।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥ २ ॥**

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैरपि वैयाकरणैः सहृदयैरेव संवेद्यतया बोद्धृभेदः । 'भम धम्मिअ—' इत्यादौ क्वचिद्वाच्ये विधिरूपे निषेधरूपतया, क्वचित् 'निःशेषच्युतचन्दनम्—' इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः । 'गतोऽस्तमर्कः' इत्यादौ च वाच्योऽर्थ एक एव प्रतीयते । व्यङ्ग्यस्तु तद्बोद्धादिभेदात् क्वचित् 'कान्तमभिसर' इति, 'गावो निबध्यन्ताम्' इति, 'नायकस्यायमागमनावसरः' इति, 'सन्तापोऽधुना नास्ति' इत्यादिरूपेणानेक इति संख्याभेदः । वाच्योऽर्थः शब्दोच्चारणमात्रेण वेद्यः । एष तु तथाविधप्रतिभानैर्मल्यादिनेति निमित्तभेदः । प्रतीतिमात्रकरणाच्चमत्कारकरणाच्च कार्यभेदः । केवलरूपतया चमत्कारितया च प्रतीतिभेदः । पूर्वपश्चाद्भावेन च कालभेदः । शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाश्रयभेदः ।

'कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरम् ।
सभमरपउमग्घाइरि वारिअवामे सहसु एह्निं ॥'
( कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥ )

इति सखीतत्कान्तगतत्वेन विषयभेदः । तस्मान्नाभिधेय एव व्यङ्ग्यः । तथा

**प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाभिधे ।**
**किं च मुख्यार्थबाधस्य विरहादपि लक्षणा ॥ ३ ॥**

'न बोधिका' इति शेषः । नहि कोऽपि रसनात्मकव्यापाराद्भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति यमिमे लक्षणाभिधे बोधयेताम् । किं च यत्र 'गङ्गायां घोषः' इत्यादावुपात्तशब्दार्थानां बुभूषितान्वयोऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः । यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्यैः—

'श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥' (तृतीये स्तबके १२)

न पुनः 'शून्यं वासगृहम्—' इत्यादौ मुख्यार्थबाधः । यदि च 'गङ्गायां घोषः' इत्यादौ प्रयोजनं लक्ष्यं स्यात्, तीरस्य मुख्यार्थत्वं बाधितत्वं च स्यात्, तस्यापि च लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्थापातः ।

---

१ 'निपुणैर्वैयाकरणैरपि सहृदयैरेव च संवेद्यतया' नि-च; 'निपुणैः सहृदयैरेव च वेद्य' बा. २ 'तद्गतादपि' नि. ३ ध्वन्यालोके प्रकटोद्भूतो उदाहरणमिदं काव्यप्रकाशे पञ्चमोल्लासे च. ४ 'वाच्यविषयत्वेन' नि-च. ५ 'वाच्यं' ख-ग.

सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः ।
रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः ॥ ५ ॥

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम् ॥

इति साहित्यदर्पणे व्यञ्जनाव्यापारो नाम पञ्चमः परिच्छेदः ।

---

## षष्ठः परिच्छेदः ।

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह—

दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।
दृश्यं तत्राभिनेयं

तस्य रूपकसंज्ञाहेतुमाह—

तद्रूपारोपात्तु रूपकम् ॥ १ ॥

तद्दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते । कोऽसावभिनय इत्याह—

भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ॥ २ ॥

नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः । रूपकभेदानाह—

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ३ ॥

किं च ।

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥ ४ ॥
संलापकं श्रीगदितं शिल्पकं च विलासिका ।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥ ५ ॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।
विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ ६ ॥

सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणां च । तत्र

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ ७ ॥
सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥ ८ ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ ९ ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ॥ १० ॥

---

१ 'नटैरङ्गादि' नि-क. २ 'पञ्चाधिका' ग.

चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥ ११ ॥

ख्यातं रामायणादिप्रसिद्धं वृत्तम् । यथा—रामचरितादि । सन्धयो वक्ष्यन्ते । नानाविभूतिभिर्युक्तमिति महासहायम् । सुखदुःखसमुद्भूतत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम् । राजर्षयो दुष्यन्तादयः । दिव्याः श्रीकृष्णादयः । दिव्यादिव्यः, यो दिव्योऽप्यात्मनि नराभिमानी । यथा—श्रीरामचन्द्रः । 'गोपुच्छाग्रसमाग्रमिति क्रमेणाङ्काः सूक्ष्माः कर्तव्याः' इति केचित् । अन्ये त्वाहुः—'यथा गोपुच्छे केचिद्वालाः ह्रस्वाः केचिद्दीर्घास्तथेह कानिचित्कार्याणि मुखसन्धौ समाप्तानि कानिचित्प्रतिमुखे । एवमन्येष्वपि कानिचित्कानिचित्' इति ।

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ १२ ॥
विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥ १३ ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥ १४ ॥
नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ १५ ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ १६ ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्युपरोधनम् ॥ १७ ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥ १८ ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥ १९ ॥

बिन्द्वादयो वक्ष्यन्ते । आवश्यकं संध्यावन्दनादि । अङ्कप्रस्तावाद्गर्भाङ्कमाह—

अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।
अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ॥ २० ॥

यथा बालरामायणे—रावणं प्रति (कञ्चुकी) ।

'श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥' (३.१२)

इत्यादिना विरचितः सीतास्वयंवरो नाम गर्भाङ्कः ।

तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम् ॥ २१ ॥

---

१ '°समाग्रं तु' लि–क. २ 'शापोत्सर्गौ' लि–ख. ३ 'नगराद्यवरोधनम्' लि. ४ '°रसोर्जितैः' ग. ५ '°द्वाराङ्कादिमान्' ग.

तत्रेति नाटके ।

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ २२ ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥ २३ ॥

तस्याः स्वरूपमाह—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ २४ ॥ (नाट्य० ५.२५)
माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥ २५ ॥

अष्टपदा यथा अनर्घराघवे—'निष्प्रत्यूहम्—' इत्यादि (१.१)। द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्—

'शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।
अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥'

एवमन्यत्र । एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम् । वस्तुतस्तु 'पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्' इत्यपरे । यदुक्तम्—

'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥' इति । (नाट्य० ५.२७)

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात्प्रथमं नटैरेव कर्तव्यतया न महर्षिणा निर्देशः कृतः । कालिदासादिमहाकविप्रबन्धेषु च—

'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥' (विक्रमो० १.१)

एवमादिषु नान्दीलक्षणायोगात् । उक्तं च—'रङ्गद्वारमारभ्य कविः कुर्यात्—' इति । अत एव प्राक्तनपुस्तकेषु 'नान्द्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु—' इत्यादिश्लोकलिखनं दृश्यते । यच्च पश्चात् 'नान्द्यन्ते सूत्रधारः' इति लिखनं तस्यायमभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इतःप्रभृति नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति ।

पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।
प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ॥ २६ ॥
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।

---

१ 'संयुक्ता नित्यं यस्मात्' ग. २ 'शङ्खचक्राब्ज' ग. ३ 'पादैर्युक्ता' ग. ४ 'अष्टपदा' ग. ५ 'इत्यन्ये' नि; 'इत्युच्यते' ख. ६ 'रङ्गद्वारात्' नि-ख. ७ 'महाप्रबन्धेषु' ग. ८ 'इतःप्रभृति यथा नाटक' नि-ख. ९ 'विधाय' नि-ख. १० 'दिव्यमर्त्ये च' ग; 'दिव्यमर्त्येषु तद्रूपो' ख.

**सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ २७ ॥**

काव्यार्थस्य स्थापनात्स्थापकः । तद्वदिति सूत्रधारसदृशगुणाकारः । इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः । स स्थापको दिव्यं वस्तु दिव्यो भूत्वा, मर्त्यं वस्तु मर्त्यो भूत्वा, मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत् । वस्तु इतिवृत्तम् । यथोदात्तराघवे—

'रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां संपदं
प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥'[1]

बीजं यथा रत्नावल्याम्—

'द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥' (१.७)

अत्र हि समुद्रे प्रवहणभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम् । मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः । यथा—

'आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः ।
उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः ॥'[2]

पात्रं यथाभिज्ञानशाकुन्तले—

'तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥' (१.५)

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।**
**रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ॥ २८ ॥**
**ऋतुं च कंचित्प्रायेण भारतीं वृत्तिमाश्रितः ।**

स स्थापकः । प्रायेणेति क्वचिदृतोरकीर्तनमपि । यथा—रत्नावल्याम् । भारतीवृत्तिस्तु—

**भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ॥ २९ ॥**

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

**तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**
**अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥ ३० ॥**

प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । यथा रत्नावल्याम्—

'श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,
लोके हारि च वत्सराजचरितं, नाट्ये च दक्षा वयम् ।

---

१ अयं श्लोको दशरूपके (३.४) दृश्यते. २ 'घनमुक्तं' लि. ३ 'श्रोत्रिकाः' लि-ब. ४ ''कान्तिः' लि. ५ दशरूपके (३.३.१० इत्या) व्याहृतमिदम्. ६ 'गोत्रमपि कीर्तयेद्' ग.

वत्स्यैकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥' (रत्ना० १.६)

वीथीप्रहसने वक्ष्येते ।

नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ ३१ ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः[1] ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥ ३२ ॥

सूत्रधारसदृशत्वात्स्थापकोऽपि सूत्रधार उच्यते । तस्यानुचरः पारिपार्श्विकः तस्मात्किंचिदूनो नटः ।

उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥ ३३ ॥

तत्र

पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥ ३४ ॥

यथा मुद्राराक्षसे सूत्रधारः—

'क्रूरग्रहः स केतुश्चन्द्रमसंपूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्—'

इत्यनन्तरम्—'(नेपथ्ये ।) आः, क एष मयि जीवति चन्द्रगुप्तमभिभवितुमि-च्छति[2] ।' इति । अत्रान्यार्थवन्त्यपि पदानि हृदि न्यार्थगत्या अर्थान्तरे संक्रमय्य पात्रप्रवेशः ।

सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।
भवेत्पात्रप्रवेशश्चेत्कथोद्घातः स उच्यते ॥ ३५ ॥

वाक्यं यथा रत्नावल्याम्—'द्वीपादन्यस्मादपि—' इत्यादि सूत्रधारेण पठिते—'(नेपथ्ये ।) एवमेतत् । कः सन्देहः । द्वीपादन्यस्मादपि—' इत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः । वाक्यार्थं[3] यथा वेण्याम्—

'निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥' (१.७)

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा—'(नेपथ्ये ।) आः दुरात्मन्, वृथा मङ्गलपाठक, कथं स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ।' ततः सूत्रधारो निष्क्रान्तो[4] भीमसेनस्य प्रवेशः ।

यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥ ३६ ॥

यथा कुन्दमालायाम्—'(नेपथ्ये ।) इत इतोऽवतरत्वार्या । सूत्रधारः—कोऽयं खल्वार्याह्वानेन साहाय्यकमपि मे सम्पादयति । (विलोक्य ।) कष्टमतिकरुणं वर्तते ।

---

१ 'प्रस्तुताक्षेपिभिर्मिथः' ग. २ '°मभिभवितु°' नि-क. ३ 'वाक्यार्थो यथा' नि.
४ 'सूत्रधारनिष्क्रान्तौ' नि.

लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन ।
निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥'

अत्र नृत्यप्रयोगार्थं स्वकार्याख्यानमिच्छता सूत्रधारेण 'सीतां वनाय परिकर्षति लक्ष्मणोऽयम्' इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः ।

**कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत् ।**
**तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम् ॥ ३७ ॥**

यथा—'आसादितप्रकट–' इत्यादि । '(ततः प्रविशति यथानिर्दिष्टो रामः ।)'

**यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।**
**प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥ ३८ ॥**

यथा शाकुन्तले—सूत्रधारो नटीं प्रति । 'तवास्मि गीतरागेण–' इत्यादि । ततो राज्ञः प्रवेशः ।

**योऽप्यन्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि ।**

अत्र आमुखे । उद्धात(त)कावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि । नखकुट्टस्तु—

**नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा ॥ ३९ ॥**
**समाश्रित्यापि कर्तव्यमामुखं नाटकादिषु ।**
**एषामामुखभेदानामेकं कञ्चित्प्रयोजयेत् ॥ ४० ॥**
**तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ।**
**प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत् ॥ ४१ ॥**

वस्त्वितिवृत्तम् ।

**इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।**
**आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ॥ ४२ ॥**
**अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।**
**तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ ४३ ॥**

फले प्रधानफले । यथा बालरामायणे रामचरितम् ।

**अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते ।**

अस्याधिकारिकेतिवृत्तस्य उपकारनिमित्तं यच्चरितं तत्प्रासङ्गिकम् । यथा सुग्रीवादिचरितम् ।

**पताकास्थानकं योज्यं सुविचार्येह वस्तुनि ॥ ४४ ॥**

इह नाट्ये ।

**यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।**
**आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ४५ ॥ (नाट्य० १९.२९)**

तद्भेदानाह—

सहसैवार्थसम्पत्तिर्गुणवत्युपकारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥ ४६ ॥ (नाट्य० १९.३०)

यथा रत्नावल्याम्—'वासवदत्तेयम्' इति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या 'सागरिकेयम्' इति प्रत्यभिज्ञाय 'कथम् । प्रिया मे सागरिका ।
अलमलमतिमात्रं साहसेनामुना ते, त्वरितमयि विमुञ्च त्वं लतापाशमेतम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥' (३.१७)

इति फलरूपार्थसम्पत्तिः पूर्वापेक्षयोपकारातिशयाद्गुणवत्युत्कृष्टा ।

वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥४७॥(नाट्य० १९.३१)

यथा वेण्यां भीमः—
'रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनान्नेतृमङ्गलप्रतिपत्तौ[1] सत्यां द्वितीयं पताकास्थानम् ।

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ४८ ॥ (नाट्य० १९.३२)

लीनमव्यक्तार्थम् । श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम्, सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पाद्यते यत्तृतीयं पताकास्थानम् ।

यथा वेण्यां द्वितीयेऽङ्के—'कञ्चुकी—देव, भग्नं भग्नं । राजा—केन । कञ्चुकी—भीमेन । राजा—कस्य । कञ्चुकी—भवतः । राजा—आः, किं प्रलपसि । कञ्चुकी—(सभयम् ।) देव, ननु ब्रवीमि । भग्नं भीमेन भवतः । राजा—धिग् वृद्धापसद, कोऽयमद्य ते व्यामोहः । कञ्चुकी—देव, न व्यामोहः । सत्यमेव ब्रवीमि ।
भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव[2] क्षितौ ॥' (वेणी० २.२४)

अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम् ।

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी[3] पताकास्थानकं परम् ॥ ४९ ॥

यथा रत्नावल्याम्—
'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥' (२.३)

अत्र भाव्यर्थः सूचितः । एतानि चत्वारि पताकास्थानानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थं सर्वसन्धिषु भवन्ति । काव्यकर्तुरिच्छावशाद्भूयो भूयोऽपि भवन्ति ।

---

१ 'बीजार्थप्रतिपादनादमङ्गल' ग. २ 'किङ्किणीजाल' ग. ३ ''रार्थी' ग—घ.

यत्पुनः केनचिदुक्तम्—'मुखसन्धिमारभ्य सन्धिचतुष्टये अङ्का भवन्ति' इति, तदन्ये न मन्यन्ते । यथासम्भवमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितुं युक्तत्वात् ।

यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ ५० ॥

अनुचितमितिवृत्तं यथा—रामस्य छद्मना वालिवधः । तच्चोदात्तराघवे नोक्तमेव । वीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः ।

अङ्केष्वदर्शनीया या वक्तव्यैव च संमता ।
या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ॥ ५१ ॥
अन्या च विस्तरात्सूच्या सार्थोपक्षेपकैर्बुधैः ।

अङ्केषु अदर्शनीया कथा युद्धादिकथा ।

वर्षादूर्ध्वं तु यद्वस्तु तत्स्याद्वर्षादधोभवम् ॥ ५२ ॥

उक्तं हि मुनिना—

'अङ्कच्छेदे कार्यं मासकृतं वर्षसंचितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥' ( नाट्य० १८.३१ )

एवं च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः ।

दिनावसाने कार्यं यद्दिने नैवोपपद्यते ।
अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥ ५३ ॥

के तेऽर्थोपक्षेपका इत्याह—

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥ ५४ ॥
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ ५५ ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः ॥ ५६ ॥

तत्र शुद्धो यथा—मालतीमाधवे श्मशाने कपालकुण्डला । संकीर्णो यथा—रामाभिनन्दे क्षपणककापालिकौ । अथ प्रवेशकः—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ५७ ॥

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा—वेण्यामश्वत्थामाङ्के राक्षस-मिथुनम् । अथ चूलिका—

अन्तर्यवनिकासंस्थैः सूचनार्थस्य चूलिका ।

यथा वीरचरिते चतुर्थाङ्कस्यादौ—'( नेपथ्ये । ) भो भो वैमानिकाः, प्रवर्तन्तां रङ्गमङ्गलानि ।' इत्यादि । अनेन 'रामेण परशुरामो जितः ।' इति नेपथ्ये पात्रैः सूचितम् । अथाङ्कावतारः—

अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ॥ ५८ ॥
यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ।

यथा—अभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः ।

अथाङ्कमुखम्—

यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाखिला ॥ ५९ ॥
तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत् ।

यथा—मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात्संनिवेशं सूचितवत्यौ ।

अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ॥ ६० ॥ (दश० १.६२)

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः । यथा वीरचरिते द्वितीयाङ्कान्ते—'(प्रविश्य ।) **सुमन्त्रः**—भगवन्तौ वसिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । **इतरे**—क्व भगवन्तौ । **सुमन्त्रः**—महाराजदशरथस्यान्तिके । **इतरे**—तत्तत्रैव गच्छामः ।' इत्यङ्कपरिसमाप्तौ । 'ततः प्रविशन्त्युपविष्टा वसिष्ठविश्वामित्रपरशुरामाः ।' इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यम्, इति । एतच्च धनिकमतानुसारेणोक्तम् । अन्ये तु—'अङ्कावतरणेनैवेदं गतार्थम्' इत्याहुः ।

अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ।
यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा ॥ ६१ ॥
कार्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः ।

यथा—रत्नावल्यां यौगन्धरायणप्रयोजितः ।

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ ६२ ॥
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ।

यथा शाकुन्तले ।

विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः ॥ ६३ ॥
अन्योन्येन तिरोधानं न कुर्याद्रसवस्तुनोः ।

रसः शृङ्गारादिः । यदुक्तं धनिकेन—

'न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ॥' इति (दश० ३.३२)

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ॥ ६४ ॥
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ।

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः । तत्र बीजम्—

अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ॥ ६५ ॥
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ।

---

१ 'व्यतिकुन्तला' ग. २ 'प्रतीतौ' ग.

यथा—रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापारः। यथा वा—वेण्यां द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः।

**अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ ६६ ॥**

यथा—रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति 'उदयनस्येन्दोरिवोद्वीक्षते' इति सागरिका श्रुत्वा ( 'सहर्षम्।' ) कहं एसो सो उदयणणरिन्दो' इत्यादिरवान्तरार्थहेतुः।

**व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।**

यथा—रामचरिते सुग्रीवादेः, वेण्यां भीमादेः, शाकुन्तले विदूषकस्य चरितम्।

**पताकानायकस्य स्यान्न स्वकीयंफलान्तरम् ॥ ६७ ॥**
**गर्भे सन्धौ विमर्शे वा निर्वाहस्तस्य जायते।**

यथा—सुग्रीवादे राज्यप्राप्त्यादि। यत्तु मुनिनोक्तम्—

'आ गर्भाद्वा विमर्शाद्वा पताका विनिवर्तते।' इति ( नाट्य० १९.२८ )

तत्र 'पताकेति पताकानायकफलं निर्वहणपर्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्' इति व्याख्यातमभिनवगुप्तपादैः।

**प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ ६८ ॥**

यथा—कुलपत्यङ्के रावणजटायुसंवादः।

**प्रकरीनायकस्य स्यान्न स्वकीयं फलान्तरम्।**
**अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ॥ ६९ ॥**
**समापनं तु यत्सिद्ध्यै तत्कार्यमिति संमतम्।**

यथा—रामचरिते रावणवधः।

**अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ॥ ७० ॥**
**आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः।**

तत्र

**भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ॥ ७१ ॥**

यथा—रत्नावल्यां रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्यौत्सुक्यम्। एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम्।

**प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः।**

यथा रत्नावल्याम्—'तह वि ण अत्थि अण्णो दंसणोवाओ त्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सं।' इत्यादिना प्रतिपादितो रत्नावलीचित्रलेखनादिर्वत्सराजसङ्गमोपायः। यथा च—रामचरिते समुद्रबन्धनादिः।

**उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ॥ ७२ ॥**

यथा—रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्ताकृतापायशङ्कया चानिर्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्राप्त्याशा। एवमन्यत्र।

---

१ 'रवान्तरार्थ' ग. २ 'स्वकीयं फलान्त' ग. ३ 'संमितम्' ग. ४ 'फलागमाः' ग. ५ 'तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामि' ( इति संस्कृतम् ). ६ 'संकल्पफल' ग.

उपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।

अपायाभावान्निश्चितैकान्तफलप्राप्तिः । यथा रत्नावल्याम्—'राजा—देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामि ।' इति द्वितीयस्याङ्कस्यान्ते देवीलक्षणापायस्य प्रसादनेन निराकरणान्नियतफलप्राप्तिः सूचिता ।

सावस्था फलयोगः स्याद्यः समग्रफलोदयः ॥ ७३ ॥

यथा—रत्नावल्यां रत्नावलीलाभश्चक्रवर्तित्वलक्षणफलान्तरलाभसहितः । एवमन्यत्र ।

यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।
पञ्चधैवेतिवृत्तस्य भागाः स्युः, पञ्च सन्धयः ॥ ७४ ॥

तल्लक्षणमाह—

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः ।

तद्भेदानाह—

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ॥ ७५ ॥
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ।

यथोद्देशं लक्षणमाह—

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ॥ ७६ ॥
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ।

यथा—रत्नावल्यां प्रथमेऽङ्के ।

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ॥ ७७ ॥
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ।

यथा—रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गता-विदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानस्योद्देशरूप उद्भेदः ।

फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ॥ ७८ ॥
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ।

फलस्य गर्भीकरणाद्गर्भः । यथा रत्नावल्यां द्वितीयेऽङ्के—'सुसङ्गता—सहि, अदक्खिणा दाणिं सि तुमं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं ण मुञ्चसि ।' इत्यादौ समुद्भेदः । पुनर्वासवदत्ताप्रवेशे ह्रासः । तृतीयेऽङ्के—'तदर्थान्वेषणाय गतः कथं चिरयति वसन्तकः ।' इत्यन्वेषणम् । 'विदूषकः—ही ही भोः, कोसम्बीरज्जलम्भेणावि ण तारिसो पिअवअस्सस्स परितोसो जारिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि ।' इत्याद्युद्भेदः । पुनरपि वासवदत्ताप्रत्यभिज्ञानाद् ह्रासः । सागरिकायाः सङ्केतस्थानगमनेऽन्वेषणम् । पुनर्लतापाशकरणे उद्भेदः । अथ विमर्शः—

यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ॥ ७९ ॥
शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।

---

१ 'अन्तराऽन्तरैक' ग. २ 'यथानिर्देशं' ग.

यथा शाकुन्तले चतुर्थाङ्कादौ—'अनसूया—पिअंवदे, जइ वि गन्धव्वेण विवाहेण णिव्वुत्तकल्लाणा पिअसही सउन्दला अणुरूवभत्तुभाइणी संवुत्तेत्ति णिव्वुदं मे हिअअं'[1] इत्यत आरभ्य सप्तमाङ्कोपक्षिप्ताच्छकुन्तलाप्रत्यभिज्ञानात्प्रागर्थसञ्चयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः। अथ निर्वहणम्—

**बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्॥ ८०॥**

**ऐकार्थ्यमुपनीयन्ते[2] यत्र निर्वहणं हि तत्। (दश० १.४८–४९)**

यथा वेण्याम् (६.३८ इत्यस्यानन्तरम्)—'कञ्चुकी—(उपसृत्य। सहर्षम्।) महाराज, दिष्ट्या वर्धसे[3]। अयं खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः।' इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम्। यथा वा—शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः। एषामङ्गान्याह—

**उपक्षेपः परिकरः परिन्यासो विलोभनम्॥ ८१॥**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना।**
**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे॥ ८२॥**

यथोद्देशं लक्षणमाह—

**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः।**

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः। यथा वेण्याम्—'**भीमः**—

'लाक्षागृहानल-विषान्न-सभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान्स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः॥'

(वेणी० १.८)

**समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः॥ ८३॥**

यथा तत्रैव—

'प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्भवति किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत॥' (वेणी० १.१०)

**तन्निष्पत्तिः परिन्यासः**

यथा तत्रैव—

'चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥'

(वेणी० १.२१)

अत्रोपक्षेपो नामेतिवृत्तलक्षणस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपणमात्रम्। परिकरस्तस्यैव बहुलीकरणम्। परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनम्।

---

१ 'हिअअं तह वि पसिअं णिव्वुदिअं' इति लि-पुस्तके २ 'एकार्थ्यमुप०' लि-ख. ३ 'महाराज वर्धते' लि-ख.

एतेषां भेदः । एतानि चाङ्गानि नियमेन बीजोपदेशे भवन्ति । अङ्गान्तराणि त्वन्यथापि ।

गुणाख्यानं विलोभनम् ।

यथा तत्रैव—'द्रौपदी—णाध, किं दुक्करं तए परिकुविदेण ।' यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने—'सेयम्, तारुण्यस्य विलासः—' इत्यादि । यत्तु शाकुन्तलादिषु (१.७) 'ग्रीवाभङ्गाभिरामं—' इत्यादि मृगादिवर्णनं तद्बीजार्थसम्बन्धाभावान्न संध्यङ्गम् । एवमङ्गान्तराणामप्यूह्यम् ।

संप्रधारणमर्थानां युक्तिः

यथा—वेण्यां सहदेवो भीमं प्रति—'आर्य, किं महाराजसंदेशोऽयमव्युत्पन्न एवार्येण गृहीतः ।' इत्यतः प्रभृति यावद्भीमवचनम्—

'युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥' इति (वेणी० १.१७).

प्राप्तिः सुखागमः ॥ ८४ ॥

यथा तत्रैव (वेणी० १.१५)—'मथ्नामि कौरवशतं समरे न कोपात्—' इत्यादि । 'द्रौपदी—(श्रुत्वा । सहर्षम् ।) णाध, अस्सुदपुव्वं क्खु एदं वअणम् । ता पुणो पुणो भण ।'

बीजस्यागमनं यत्तु तत्समाधानमुच्यते ।

यथा तत्रैव—(नेपथ्ये ।) भो भो विराटद्रुपदप्रभृतयः, श्रूयताम्—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥' (वेणी० १.२४)

अत्र 'स्वस्था भवन्ति मयि जीवति—' इत्यादि बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात्समाधानम् ।

सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ८५ ॥

यथा बालचरिते—

'उत्साहातिशयं वत्स तव बाल्यं च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥'

यथा वा मम प्रभावत्याम्—'नयनयुगासेचनकम्—' इत्यादि ।

कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना ।

यथा—वेण्यां (१.२४ श्लोकानन्तरं) द्रौपदी युद्धं स्यान्न वेति संशयाना तूर्यशब्दानन्तरम् 'णाध, किं दाणिं एसो पलअजलहरत्थणिदमंसलो क्खणे क्खणे समरदुंदुही ताडीअदि ।'

बीजार्थस्य प्ररोहः स्यादुद्भेदः

---

१ मम समरेऽपि कोप इत्यधिको ग—पुस्तके. २ 'मृगादिवर्णनं' नि—ब. ३ 'कुतूहलोत्तरा' ग. क

यथा तत्रैव—'द्रौपदी—णाह, पुणो वि तुए समासासइदव्वा।
भीमः—भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥' (वेणी० १.२६)

करणं पुनः ॥ ८६ ॥

**प्रकृतार्थसमारम्भः**

यथा तत्रैव—'देवि, गच्छामो वयमिदानीं कुरुकुलक्षयाय।' इति।

**भेदः संहतभेदनम्।**

यथा तत्रैव (वेणी० १.२५ श्लोकस्याधस्तात्)—'अत एवाद्यप्रभृति भिन्नोऽहं भवद्भ्यः।' केचित्तु (दश० १.२९) 'भेदः प्रोत्साहना' इति वदन्ति।

अथ प्रतिमुखाङ्गानि—

**विलासः परिसर्पश्च विधुतं तापनं तथा ॥ ८७ ॥**
**नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः।**
**विरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम् ॥ ८८ ॥**
**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि।**

तत्र

**समीहा रतिभोगार्था विलास इति कथ्यते ॥ ८९ ॥**

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः। यथा शाकुन्तले—

'कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते॥' (२.१)

**दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते।**

यथा शाकुन्तले—'राजा—भवितव्यमत्र तया। तथा हि।
अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा॥' (३.५)

**कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः ॥ ९० ॥**

यथा तत्रैव (३.१८ इत्यस्मात् प्राक्)—'अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण।' केचित्तु (दश० १.३३) 'विधुतं स्यादरतिः' इति वदन्ति।

**उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।**

यथा रत्नावल्याम्—'सागरिका—

दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा।
पिअसहि विसमं पेम्मं मरणं सरणं णवरि एक्कम्॥' (२.१)

(दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा।
प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकम्॥)

---

१ 'परिभवक्षान्तिलज्जावधुरिता' ख. २ 'करणं' ख. ३ 'भवतः' ग. ४ 'विधूतं' ख. ५ 'तपनं' ख. ६ '°श्वासि' लि. ७ 'दृष्टनष्ट°' लि. ८ 'विधूतं' ख. ९ 'तपनं' ग.

तव अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही सागरिआ । ता एदं गेण्ह पसादी-अदु ।' केचित्तु—'उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्तितः ।' इति वदन्ति (नाट्य० १९.७६)। उदाहरन्ति च तत्रैव—'अदिमुहरा क्खु सा गब्भदासी' इति।

**चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।**

यथा महावीरचरिते तृतीयेऽङ्के—

'परिषदियमृषीणामेष वीरो युधाजित्सममृषिभिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः प्रभुरपि जनकानामद्रुहो याजकास्ते ॥' (३.५)

इत्यत्र ऋषिक्षत्रादीनां वर्णानां मेलनम् । अभिनवगुप्तपादास्तु—'वर्णशब्देन पात्राण्युपलक्ष्यन्ते । संहारो मेलनम्' इति व्याचक्षते । उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के—'अदो वि मे अअं गुरुअरो पसादो—' इत्यादेरारभ्य 'णं हत्थे गेण्हिअ पसादेहि णं । राजा—क्वासौ क्वासौ ।' इत्यादि । अथ गर्भाङ्गानि—

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ९४ ॥**
**संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ।**
**त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा ॥ ९५ ॥**
**तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ।**

यथा अश्वत्थामाङ्के—

'अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति पुनर्व्याहृतं सत्यवाचा ।' (वेणी० ३.११)

**तत्त्वार्थकथनं मार्गः**

यथा चण्डकौशिके—'राजा—भगवन्,
गृह्यतामर्जितमिदं भार्यातनयविक्रयात् ।
शेषस्यार्थे करिष्यामि चण्डालेऽप्यात्मविक्रयम् ॥'

**रूपं वाक्यं वितर्कवत् ॥ ९६ ॥**

यथा रत्नावल्याम्—'राजा—
मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥' (२.२)

**उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ।**

यथा अश्वत्थामाङ्के—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी, चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥' (वेणी० ३.३२)

---

१ 'परिषदियमृषीणा॰' लि. २ 'णाअअ णो आअदो' लि. ३ 'गब्भो' ग-घ ४ 'त्रोटक' इति दशरूपके (१-३७) ५ 'शेते गजः' ग. ६ अस्मादग्रे श्लोकार्धं 'उच्चुमणी' इत्यधिकं लि-पुस्तके.

**भावतत्त्वोपलब्धिस्तु क्रमः स्यात्**

यथा शाकुन्तले—'**राजा**—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । तथाहि ।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥' ( ३.१२ )

**संग्रहः पुनः ॥ ९७ ॥**

**सामदानार्थसम्पन्नः**

यथा रत्नावल्याम्—'**राजा**—साधु वयस्य, इदं ते पारितोषिकम् । (इति कटकं ददाति ।)'

**लिङ्गादूहोऽनुमानता ।**

यथा जानकीराघवे नाटके—'**रामः**—

लीलागतैरपि तरङ्गयतो धरित्रीमालोकनैर्नमयतो जगतां शिरांसि ।
तस्यानुमापयति काञ्चनकान्तिगौरकायस्य सूर्यतनयत्वमधृष्यतां च ॥

**रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत् ॥ ९८ ॥**

यथा रत्नावल्याम्—'प्रिये सागरिके,

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥' ( ३.११ )

इदं च प्रार्थनाख्यमङ्गम् । यन्मते निर्वहणे भूतावसेरत्वात्प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम् । अन्यथा पञ्चषष्टिसंख्यत्वप्रसङ्गात् ।

**रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्**

यथाश्वत्थामाङ्के—

'एकस्यैव विपाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥' ( वेणी० ३.२४ )

**त्रोटकं पुनः ।**

**संरब्धवाक्**

यथा चण्डकौशिके—'**कौशिकः**—आः, पुनः कथमद्यापि न सम्भृतानि दक्षिणासुवर्णानि ।

**अधिबलमभिसन्धिश्छलेन यः ॥ ९९ ॥**

यथा रत्नावल्याम्—'**काञ्चनमाला**—भट्टिणि, इअं सा चित्तसालिआ । वसन्तअस्स सण्णं करेमि ।' इत्यादि (भट्टिनि, इयं सा चित्रशालिका । वसन्तकस्य संज्ञां करोमि ।)

**नृपादिजनिता भीतिरुद्वेगः परिकीर्तितः ।**

यथा वेण्याम्—

---

१ 'भूतानवसरत्वाभावात्' ग. २ 'प्रशान्तिनामा' ग. ३ 'सम्भृताः कर्णदक्षिणाः' नि-व.

'प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।
स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥' (५.२५)

**शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः ॥ १०० ॥**

'कालान्तककरालास्यं क्रोधोद्धूतं दशाननम् ।
विलोक्य वानरानीके संभ्रमः कोऽप्यजायत ॥'

अथ विमर्शाङ्गानि—

**अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः ।
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥ १०१ ॥
प्ररोचना विमर्शे स्यादादानं छादनं तथा ।
दोषप्रख्यापवादः स्यात्**

यथा वेण्याम्—'**युधिष्ठिरः**—पाञ्चालक, कच्चिदासादिता तस्य दुरात्मनः कौरव्यापसदस्य पदवी । **पाञ्चालकः**—न केवलं पदवी, स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।' (६.२ इति श्लोकस्यानन्तरम्)

**सम्फेटो रोषभाषणम् ॥ १०२ ॥**

यथा तत्रैव—'**राजा**—अरे रे मरुत्तनय, वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे । शृणु रे,

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
तस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥ (वेणी० ५.३०)

**भीमः**—(सक्रोधम् ।) आः पाप । **राजा**—आः पाप ।' इत्यादि ।

**व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ।**

यथा तत्रैव—'**भीमः**—

निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसानतः ॥' (वेणी० ५.२८)

**द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ॥ १०३ ॥**

यथा तत्रैव—'**युधिष्ठिरः**—भगवन् कृष्णाग्रज सुभद्राभ्रातः,

ज्ञातिप्रीतिर्मनसि न कृता, क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ॥' (वेणी० ६.२०)

**तर्जनोद्वेजने प्रोक्ता द्युतिः**

यथा तत्रैव दुर्योधनं प्रति भीमेनोक्तम्—

१ 'पदवि' ग. २ 'नाशितम्' ग.

'जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं मन्यसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो विहाय समरं पङ्केऽधुना लीयसे॥' (वेणी० ६.७)

**शक्तिः पुनर्भवेत्।**

**विरोधस्य प्रशमनं**

यथा तत्रैव—

'कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः।
मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि॥' (वेणी० ५,२६)

**प्रसङ्गो गुरुकीर्तनम्॥ १०४॥**

यथा मृच्छकटिकायाम्—'**चाण्डालः**—एसो क्खु सागलदत्तस्स सुओ अज्ज-विणअदत्तस्स णत्तिओ चारुदत्तो वावादिदुं वज्झट्ठाणं णिज्जइ। एदेण किल गणिआ वसन्तसेणा सुवण्णलोहेण वावादिद त्ति।

**चारुदत्तः**—

मखशतपरिपूतं गोत्रमुद्भासितं यत्सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात्।
मम निधनदशायां वर्तमानस्य पापैस्तदसदृशमनुष्यैर्घुष्यते घोषणायाम्॥' (१०.१२)

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गाद्गुरुकीर्तनमिति प्रसङ्गः।

**मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः।**

मनःसमुत्पन्नो यथा मालतीमाधवे—

'दलति हृदयं गाढोद्वेगं, द्विधा न तु भिद्यते
वहति विकलः कायो मोहं, न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः, करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी, न कृन्तति जीवितम्॥' (९.१२)

एवं चेष्टासमुत्पन्नोऽपि।

**ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते॥ १०५॥**

यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः—'सखे, कथमिह त्वमेकाकी वर्तसे। क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती। **विदूषकः**—असुर-वइणा आआरिअ कहिं पि णीदा (असुरपतिना आकार्य कुत्रापि नीता)। **प्रद्युम्नः**—(दीर्घं निःश्वस्य।)

हा पूर्णचन्द्रमुखि मत्तचकोरनेत्रे मामानताङ्गि परिहाय कुतो गतासि।
गच्छ त्वमद्य ननु जीवित तूर्णमेव दैवं कदर्थनपरं कृतकृत्यमस्तु॥'

---

१ 'भाले' ग. २ 'वरा सकला' ' ग. ३ 'कथंचित्ददतु' ' लि-च. ४ '°गुरुकीर्ति' ग-च. ५ 'गाढोत्कण्ठं' ग.

**कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ।**

यथा वेण्याम्—'**युधिष्ठिरः**—

तीर्णे भीष्ममहोदधौ, कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते, शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥' (६.१)

**प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ॥ १०६ ॥**

यथा वेण्याम्—'**पाञ्चालकः**—अहं देवेन चक्रपाणिना । (इत्युपक्रम्य ।) कृतं सन्देहेन ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते,
कृष्णात्यन्तचिरोज्झिते तु कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि,
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥' (वेणी० ६.१२)

**कार्यसंग्रह आदानं**

यथा वेण्याम्—'भो भोः समन्तपञ्चकसञ्चारिणः,

नाहं रक्षो, न भूतो, रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखाभुक्तशेषाः, कृतं व-
स्त्रासेनानेन, लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥' (६.३७)

अत्र समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम् ।

**तदाहुश्छादनं पुनः ।**
**कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ॥ १०७ ॥**

यथा तत्रैव—'**अर्जुनः**—आर्य,

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥' (वेणी० ५.३१)

अथ निर्वहणाङ्गानि—

**सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ।**
**कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥ १०८ ॥**
**भाषणं पूर्ववाक्यं च काव्यसंहार एव च ।**
**प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥ १०९ ॥**

तत्र

**बीजोपगमनं सन्धिः**

यथा वेण्याम् (६-४१ इत्यस्मादनन्तरं)—'**भीमः**—भवति यज्ञवेदिसम्भवे,

---

१ '" पालिता अङ्कितः' लि-ख. २ 'करोत्येव' लि-ख.

स्मरति भवती यन्मयोक्तम्—'चञ्चद्भुज–' (१.२१) इत्यादि। अनेन मुखे क्षिप्तबीजस्य पुनरुपगमनमिति सन्धिः।

**विबोधः कार्यमार्गणम्।**

यथा तत्रैव (६.४० इत्यस्मादनन्तरं)—'**भीमः**—मुञ्चतु मामार्यः क्षणमेकम्। **युधिष्ठिरः**—किमपरमवशिष्टम्। **भीमः**—सुमहदवशिष्टम्। संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्। **युधिष्ठिरः**—गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसंहारम्।' इति। अनेन केशसंयमनकार्यस्यान्वेषणाद्विबोधः।

**उपन्यासस्तु कार्याणां ग्रथनं**

यथा तत्रैव—'**भीमः**—पाञ्चालि, न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम्। तिष्ठ, स्वयमेवाहं संहरामि।' इति। अनेन कार्यस्योपक्षेपाद्ग्रथनम्।

**निर्णयः पुनः ॥ ११० ॥**

**अनुभूतार्थकथनं**

यथा तत्रैव—'**भीमः**—देव अजातशत्रो, अद्यापि दुर्योधनहतकः। मया हि तस्य दुरात्मनः।

भूमौ क्षिप्तं शरीरं, निहितमिदमसृक्चन्दनाभं निजाङ्गे,
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ,
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥' (वेणी० ६.२९)

**वदन्ति परिभाषणम्।**

**परिवादकृतं वाक्यं**

यथा शाकुन्तले (७.२० इत्यस्मादनन्तरं)—'**राजा**—आर्ये, अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी। **तापसी**—को तस्स धम्मदारपरिच्चाइणो णामं गेण्हिस्सदि।' (कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यति।)

**लब्धार्थशमनं कृतिः ॥ १११ ॥**

यथा वेण्याम्—'**कृष्णः**—एते भगवन्तो व्यासवाल्मीकीत्यादिना अभिषेकं धारयन्तस्तिष्ठन्तीत्यनेन (६.४४) प्राप्तराज्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः।

**शुश्रूषादिः प्रसादः स्यात्**

यथा तत्रैव भीमेन द्रौपद्याः केशसंयमनम्।

**आनन्दो वाञ्छितागमः।**

यथा तत्रैव—'**द्रौपदी**—विसुमरिदं एदं वावारं णाहस्स पसादेण पुणो वि सिक्खिस्सम्।' (विस्मृतमेतं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये।)

---

१ 'दुःशासनहतो' ग. २ 'विषक्ता' ग. ३ 'वाल्मीकिप्रमुखोऽभिषेकं धारयन्तस्ति-ष्ठन्तीत्यनेन' ख-ग.

**समयो दुःखनिर्याणं**

यथा रत्नावल्याम्—'वासवदत्ता—( रत्नावलीमालिङ्ग्य । ) समस्सस बहिणिए, समस्सस ।'

**तद्भवेदुपगूहनम् ॥ ११२ ॥**

**यत्स्यादद्भुतसंप्राप्तिः**

यथा मम प्रभावत्यां नारददर्शनात्प्रद्युम्न ऊर्ध्वमवलोक्य—

'दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः ।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम् ॥'

**सामदानादि भाषणम् ।**

यथा चण्डकौशिके—'धर्मः—तदेहि । धर्मलोकमधितिष्ठ ।'

**पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् ॥ ११३ ॥**

यथा वेण्याम्—'भीमः—बुद्धिमतिके, क्व सा भानुमती । परिभवतु संप्रति पाण्डवदारान् ।' ( ६.४१ इत्यस्यानन्तरम् )

**वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते ।**

यथा सर्वत्र—'किं ते भूयः प्रियमुपकरोमि ।' इति ।

**नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥ ११४ ॥**

यथा प्रभावत्याम्—

'राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः ।
सस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्ष्मामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे ॥'

अत्र चोपसंहारप्रशस्त्योरन्ते एकेन क्रमेणैव स्थितिः । 'इह च मुखसन्धौ उपक्षेप-परिकरपरिन्यासयुक्त्युद्भेदसमाधानानां, प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यास-पुष्पाणां, गर्भेऽभूताहरणमार्गतोटकाधिबलक्षेपाणां, विमर्शेऽपवादशक्तिव्यवसायप्ररो-चनादानानां प्राधान्यम् । अन्येषां च यथासम्भवं स्थितिः ।' इति केचित् ।

**चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ।**
**कुर्यादनियते तस्य सन्धावपि निवेशनम् ॥ ११५ ॥**
**रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ।**

यथा वेणीसंहारे तृतीयाङ्के दुर्योधनकर्णयोर्महत्संप्रधारणम् । एवमन्यदपि । यत्तु रुद्रटादिभिः 'नियम एव' इत्युक्तं तल्लक्ष्यविरुद्धम् ।

---

१ 'गौरैः धवलयन्' ग. २ 'पाण्डवान्' ग. ३ 'सत्प्रवृत्तय' ग. ४ '°क्षेपाणां' ग; 'तोटकाधिक्षेपाणां' ख. ५ इदं [illegible] ( १. ३९, ४५, ४६, ५० ) [illegible].

दृष्टार्थरचनाश्चर्यलाभो वृत्तान्तविस्तरः ॥ ११६ ॥
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ।
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ॥ ११७ ॥
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ॥ ११८ ॥
सम्पादयेतां संध्यङ्गं नायकप्रतिनायकौ ।
तदभावे पताकाद्यास्तदभावे तथेतरत् ॥ ११९ ॥

प्रायेण प्रधानपुरुषप्रयोज्यानि संध्यङ्गानि भवन्ति । किं तूपक्षेपाद्यङ्गत्रयं बीजस्या-ल्पमात्रसमुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु ।

रसव्यक्तिमपेक्ष्यैषामङ्गानां संनिवेशनम् ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ १२० ॥

तथा च वेण्यां दुर्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितः, तत्तादृशेऽव-सरेऽत्यन्तमनुचितम् ।

अविरुद्धं तु यद्वृत्तं रसादिव्यक्तयेऽधिकम् ।
तदप्यन्यथयेद्धीमान्न वदेद्वा कदाचन ॥ १२१ ॥

अनयोरुदाहरणं सत्प्रबन्धेष्वभिव्यक्तमेव । अथ वृत्तयः—

शृङ्गारे कैशिकी, वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से, वृत्तिः सर्वत्र भारती ॥ १२२ ॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।
स्युर्नायकादिव्यापारविशेषा नाटकादिषु ॥ १२३ ॥

तत्र कैशिकी—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा सा कैशिकी चारुविलासयुक्ता ॥ १२४ ॥
( नाट्य० २०. ५० )

नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
चत्वार्यङ्गान्यस्याः

तत्र

वैदग्ध्यक्रीडितं नर्म ॥ १२५ ॥

इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥ १२६ ॥

---

१ 'किं तु सर्वथादि' लि. २ 'द्विकं' लि—ख. ३ 'इदमपरं रसादिव्यञ्जकत्वे प्रबन्धस्य चेद्-यत्सन्ध्यङ्गानां निबन्धनं यथास्थानं मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यानां तदङ्गानां चोपक्षेपादीनां घटनं रसाभिव्यक्त्यपेक्षया, यथा रत्नावल्याम् । न तु केवलं शास्त्रस्थितिसम्पादनेच्छया । यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धनाननुगुणमपि द्वितीयेऽङ्के भरतमतानु-सरणमात्रेच्छया घटनम्' ( ध्वन्या० ३.१४ ). ४ 'सूक्ष्मनेपथ्यविधानचित्रा' ग. ५ 'मधुरोपचारा' ग.

तत्र केवलहास्येन विहितं यथा रत्नावल्याम्—'वासवदत्ता—( फलकमुद्दिश्य । सहासम् । ) एसा वि अवरा तव समीवे जं लिहिदा एदं किं अज्जवसन्तअस्स विण्णाणम् ।' ( एषापि अपरा तव समीपे या लिखिता एतत् किमार्यवसन्तकस्य विज्ञानम् )। सशृङ्गारहास्येन यथा शाकुन्तले—राजानं प्रति 'शकुन्तला—असंतुट्ठो उण किं करिस्ससि । राजा—इदम् । ( इति व्यवसितः । शकुन्तला वक्त्रं ढौकते )' । सभयहास्येन यथा रत्नावल्याम्—आलेख्यदर्शनावसरे 'सुसङ्गता—जाणिदो मए एसो वुत्तन्तो समं चित्तफलएण । ता देवीए गदुअ णिवेदइस्सम् ।' ( ज्ञातो मयैष वृत्तान्तः समं चित्रफलकेन । तद् देव्यै गत्वा निवेदयिष्यामि )। एतद्वाक्यसम्बन्धि नर्मोदाहरणम् । एवं वेषचेष्टासम्बन्ध्यपि ।

**नर्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः ।**

यथा मालविकायाम्—सङ्केतनायकमभिसृतायां मालविकायां 'नायकः—

विसृज सुन्दरि सङ्गमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ ( ४.१३ )

**मालविका**—भट्टा, देवीए भएण अप्पणो वि पिअं कादुं ण पारेमि ।' इत्यादि ( भर्तः, देव्या भयेन आत्मनोऽपि प्रियं कर्तुं न पारयामि )।

अथ नर्मस्फोटः—

**नर्मस्फोटो भावलेशैः सूचिताल्परसो मतः ॥ १२७ ॥**

यथा मालतीमाधवे—

'गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥' ( १.२० )

अत्र गमनादिभिर्भावलेशैर्माधवस्य मालत्यनुरागः स्तोकः प्रकाशितः ।

**नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्तिनः ।**

यथा तत्रैव सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् । अथ सात्त्वती—

**सात्त्वती बहुला सत्त्वशौर्यत्यागदयार्जवैः ॥ १२८ ॥**
**सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ।**
**उत्थापकोऽथ साङ्घात्यः संलापः परिवर्तकः ॥ १२९ ॥**
**विशेषा इति चत्वारः सात्त्वत्याः परिकीर्तिताः ।**
**उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥ १३० ॥**

यथा वीरचरिते—

आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु कुतोऽस्य संप्रति मम त्वद्दर्शने चक्षुषः ।

---

१ 'मालविकायां' इति नास्ति लि–व.–पुस्तकयोः. २ 'भाव' व. ३ 'साद्भुता तथा' व. ४ 'संघात्यः' का–च. ५ 'संघाति' लि.

यथा कृत्यारावणे षष्ठेऽङ्के—'(प्रविश्य खड्गहस्तः पुरुषः ।)' इत्यतः प्रभृति निष्क्रमणपर्यन्तम् ।

पूर्वमुक्तैव भारती ।

अथ नाट्योक्तयः—

अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ॥ १३७ ॥
सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ।
रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ॥ १३८ ॥
त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ॥ १३९ ॥
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥ १४० ॥

यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरत ऊर्ध्वाङ्गुलिनामितानामिकं त्रिपताकालक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकम् । परावृत्यान्यस्य रहस्यकथनमपवारितम् । शेषं स्पष्टम् ।

दूतीं सिद्धां च सेनां च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ॥ १४१ ॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ।

वेश्या यथा वसन्तसेनादिः । वणिग्विष्णुदत्तादिः । चेटः कलहंसादिः । चेटी मन्दारिकादिः ।

नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥ १४२ ॥

यथा रामाभ्युदयादिः ।

नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु ।

यथा मालतीमाधवादिः ।

नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ॥ १४३ ॥

यथा रत्नावली-कर्पूरमञ्जर्यादिः ।

प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ।

यथा शाकुन्तले (प्रथमेऽङ्के)—सखी 'गच्छामः' इत्यर्थे 'साधयामस्तावत्'

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ॥ १४४ ॥
राजर्षिभिर्वयस्येति तथा विदूषकेण च ।
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ॥ १४५ ॥
स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः ।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ॥ १४६ ॥
वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम् ।

---

१ 'छलितरामे' नि; 'कृत्यारावणे' ग. २ (६०) कारिकायाम्. ३ '[illegible]' ग. ४ '[illegible]' नि. ५ 'ऊर्ध्वसर्वाङ्गुलिनामितानामिकं' नि; 'ऊर्ध्वाङ्गुलिनतानामिकं' ग. ६ पताक-त्रिपताक-लक्षणं नाट्यशास्त्रे (९,१७,२६) द्रष्टव्यम्.

सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ॥ १४७ ॥
तं सूत्रधारो मार्षेति हण्डे इत्यधमैः समाः ।
वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः ॥ १४८ ॥
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ।
वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः ॥ १४९ ॥
आयुष्मन्रथिनं सूतो वृद्धं तातेति चेतरः ।
वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः ॥ १५० ॥
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ।
विप्रैरयममात्येति सचिवेति च भण्यते ॥ १५१ ॥
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ।
सुगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ॥ १५२ ॥
उपाध्यायेति चाचार्यो महाराजेति भूपतिः ।
स्वामीति, युवराजस्तु कुमारो भर्तृदारकः ॥ १५३ ॥
सौम्यभद्रमुखेत्येवमधमैस्तु कुमारकः ।
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ॥ १५४ ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।
हलेति सदृशी, प्रेष्या हञ्जे, वेश्याज्जुका तथा ॥ १५५ ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥ १५६ ॥
शकादयश्च संभाष्या भद्रदत्तादिनामभिः ।
यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ॥ १५७ ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ।

अथ भाषाविभागः—

पुरुषाणामनीचानां संस्कृतं संस्कृतात्मनाम् ॥ १५८ ॥
सौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम् ।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ॥ १५९ ॥
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी ॥ १६० ॥
प्राच्या विदूषकादीनां, धूर्तानां स्यादवन्तिजा ।
योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ॥ १६१ ॥
शकाराणां शकादीनां शाकारीं संप्रयोजयेत् ।
बाल्हीकभाषोदीच्यानां द्राविडी द्रविडादिषु ॥ १६२ ॥
आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु ।

१ 'सूत्रधारो मार्षेति' नि-ब; 'तं' इति रामचरणसंमतः पाठः. २ '°पुत्रकतातेति' नि-ब. ३ 'सुगृहीताभिधः' नि; 'सुगृहीत°' ब. ४ '°भद्रमुखेत्यस्तु' नि. ५ 'संस्कृतं स्वाकृता' नि. ६ 'चेटानां' नि. ७ '°वन्तिजा' ग.-च. ८ 'शबराणां' नि. ९ 'शाबरी' नि.

आभीरी शाबरी चापि काष्ठपत्रोपजीविषु ॥ १६३ ॥
तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक् ।
चेटीनामप्यनीचानामपि स्याच्छौरसेनिका ॥ १६४ ॥
बालानां षण्ढकानां च नीचग्रहविचारिणाम् ।
उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित् ॥ १६५ ॥
ऐश्वर्येण प्रमत्तस्य दारिद्र्योपहतस्य च ।
भिक्षुबन्धधरादीनां प्राकृतं संप्रयोजयेत् ॥ १६६ ॥
संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् ॥ १६७ ॥
यद्देश्यं नीचपात्रं तु तद्देश्यं तस्य भाषितम् ।
कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः ॥ १६८ ॥
योषित्सखीबालवेश्याकितवाप्सरसां तथा ।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ॥ १६९ ॥

एषामुदाहरणान्याकरेषु बोद्धव्यानि । भाषालक्षणानि मम तातपादानां भाषार्णवे ।

षट्त्रिंशल्लक्षणान्यत्र, नाट्यालङ्कृतयस्तथा ।
त्रयस्त्रिंशत्प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ॥ १७० ॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ।

यथालाभं प्रयोज्यानीति सम्बन्धः । अत्र नाटके । तत्र लक्षणानि—

भूषणाक्षरसङ्घातौ शोभोदाहरणं तथा ॥ १७१ ॥
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ।
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ॥ १७२ ॥
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ।
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ ॥ १७३ ॥
दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणं तथा ।
पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम् ॥ १७४ ॥
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ।

तत्र—

लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम् ॥ १७५ ॥

यथा—

'आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥'

वर्णनाक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः ।

यथा शाकुन्तले—'राजा—कच्चित्सख्यो वो नातिबाधते शरीरसन्तापः ।

---

१ [illegible] लि. २ 'चेटिका' ग. ३ 'च तथान्तरा' ग. ४ 'भाषार्णवे' ग.
५ [illegible] ग. ६ 'गर्हणं' ग.

प्रियंवदा—'संपदं लद्धसुहो उवसमं गमिस्सदि ।' (सांप्रतं लब्धसुख उपशमं गमिष्यति)

**सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ॥ १७६ ॥**
**श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ।**

यथा—

'सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥'

**यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ॥ १७७ ॥**
**साध्यतेऽभिमतः स्वार्थस्तदुदाहरणं मतम् ।**

यथा—

'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना ॥'

**हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ॥ १७८ ॥**

यथा वेण्यां (प्रथमेऽङ्के) भीमं प्रति '**चेटी**—एवं मए भणिदं भाणुमदि, तुम्हाणं अमुक्केसु केसेसु कहं देवीए केसा संजमीअन्तित्ति ।' (एवं मया भणितं भानुमति, युष्माकममुक्तेषु केशेषु कथं देव्याः केशाः संयम्यन्त इति)

**संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ।**

यथा ययातिविजये—

'इयं स्वर्गाधिनाथस्य लक्ष्मीः, किं यक्षकन्यका ।
किं चास्य विषयस्यैव देवता, किमु पार्वती ॥'

**दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम् ॥ १७९ ॥**

यथा वेण्याम् (प्रथमेऽङ्के)—'**सहदेवः**—आर्य, उचितमेवैतत्तस्या यतो दुर्योधनकलत्रं हि सा' इत्यादि ।

**तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना ।**

यथा तत्रैव—

'प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥' (वेणी० २.१४)

**समुच्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः ॥ १८० ॥**

यथा शाकुन्तले—

'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥' (१-१८)

अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव ।

**यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।**

---

१ '°लक्षणार्थ°' लि-च. २ 'वर्णेन' ग. ३ 'पल्लवरागः' ग.

**परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ १८१ ॥**

यथा—

'क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः ।
किं तु बालिनि रामेण मुक्तो बाणः पराङ्मुखे ॥'

**अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ।**

यथा शाकुन्तले—

'इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥' ( १.१६ )

**प्राप्तिः केनचिदंशेन किञ्चिद्यत्रानुमीयते ॥ १८२ ॥**

यथा मम प्रभावत्याम्—'अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती ।'

**विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम् ।**

यथा मम चन्द्रकलायाम्—'राजा—नूनमियमन्तःनिहितमदनविकारा वर्तते । यतः ।

हसति परितोषरहितं निरीक्षमाणापि नेक्षते किंचित् ।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते ॥'

**देशकालस्वरूपेण वर्णना दिष्टमुच्यते ॥ १८३ ॥**

यथा वेण्याम्—'सहदेवः—

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥' ( १.२४ )

**उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।**

यथा शाकुन्तले—

'शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥' ( ४.१७ )

**गुणातिपातः कार्यं यद्विपरीतं गुणान्प्रति ॥ १८४ ॥**

यथा मम चन्द्रकलायां चन्द्रं प्रति—

'जइ संहरिज्जइ तमो घेप्पइ सअलेहि ते पाओ ।
वससि सिरे पसुवइणो तहवि हु इत्थीअ जीअणं हरसि ॥'
( यदि संह्रियते तमो गृह्यते सकलैस्ते पादः ।
वससि शिरसि पशुपतेः तथापि खलु स्त्रिया जीवनं हरसि ॥ )

**यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ।**

---

१ 'दृष्टा' ग. २ 'आर्येऽद्यैव सम्भृतम्' ग. ३ 'तद्' ग. ४ 'ह' नि: 'हु' पाठः ख-पुस्तके.

यथा तत्रैव—'राजा—( चन्द्रकलाया मुखं निर्दिश्य । )

[illegible] सुभगे ।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ते ॥'

**सिद्धानर्थान्बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ॥ १८५ ॥**

यथा—'तृष्णापहारी विमलो द्विजावासो जनप्रियः ।
ह्रदः पद्माकरः किं तु बुधस्त्वं स जलाशयः ॥'

**पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्तिता ।**

यथा वेण्याम्—

'निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः ॥' ( ५.२८ )

**बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये ॥ १८६ ॥**

यथा—'यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः ।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितम् ॥'

**दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः ।**

वेण्याम्—कञ्चुकिनं प्रति 'दुर्योधनः—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥' ( २.५ )

**विचारस्यान्यथाभावः सन्देहात्तु विपर्ययः ॥ १८७ ॥**

यथा—'मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः ।
त्वयि राजनि ते राजन्न तथा व्यवसायिनः ॥'

**दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम् ।**

वाचा यथा—'प्रसादय पुरीं लङ्कां राजा त्वं हि विभीषण ।
आर्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा ॥'

एवं चेष्टयापि ।

**वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ॥ १८८ ॥**

यथा वेण्याम्— ( तृतीयेऽङ्के )—अश्वत्थामानं प्रति 'कृपः—दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि ।'

**माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम् ।**

यथा शाकुन्तले—'राजा—

किं शीतलैः क्लमविनोदिभिरार्द्रवातं सञ्चारयामि नलिनीदलतालवृन्तैः ।
अङ्के निवेश्य चरणावुत पद्मताम्रौ संवाहयामि करभोरु सुखं यथा ते ॥' ( ३.१८ )

**अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ॥ १८९ ॥**

---

१ 'विदुः' ग. २ 'शीतलैः क्लमविमर्दिभिः' नि. ३ [illegible] नि. ४ 'यथासुखं' नि-ख.

यथा वेण्याम्—'द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति राजा—साधु अङ्गराज, साधु।

दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा॥' ( ३.२८ )

**दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत्।**

यथा तत्रैव—कर्णं प्रति 'अश्वत्थामा—

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्रेण यत्॥' ( वेणी० ३.३५ )

**अभ्यर्थनापरैर्वाक्यैः पृच्छार्थान्वेषणं मतम्॥ १९०॥**

यथा तत्रैव ( वेण्यां चतुर्थेऽङ्के )—'सुन्दरकः—अज्जा, अवि णाम सारहिदुदिओ दिट्ठो तुम्हेहिं महाराओ दुज्जोहणो ण वेति।' ( आर्याः अपि नाम सारथिद्वितीयः दृष्टः युष्माभिः महाराजो दुर्योधनो न वेति )

**प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम्।**

यथा विक्रमोर्वश्याम्—'राजा—

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥' ( ४.१९ )

**सारूप्यमनुरूपस्य सारूप्यात्क्षोभवर्धनम्॥ १९१॥**

यथा वेण्याम्—दुर्योधनभ्रान्त्या भीमं प्रति 'युधिष्ठिरः—दुरात्मन्, दुर्योधनहतक—' इत्यादि ( ६.३५ इत्यतःपरम् )।

**संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते।**

यथा मम चन्द्रकलायाम्—'राजा—प्रिये,

'अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा।
( आत्मानं निर्दिश्य। )
अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः॥'

**गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनम्॥ १९२॥**

यथा तत्रैव—
'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि—' इत्यादि।

**सलेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम्।**

यथा वेण्याम्—'राजा—

'हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति॥' ( २.४ )

---

१ 'साधु, कथमन्यथा दत्त्वा' लि–ख. २ '°न्यस्त्रेण शस्त्रेण यत्' ग. ३ '°आत्मन' ग; 'स्वभिन्नार्थे' च. ४ 'प्रतिसंक्षेपात्स्वान्यार्थे' ग.

**मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ॥ १९३ ॥**

यथा—'रतिकेलिकलः किञ्चिदेष मन्मथमन्थरः ।
पश्य सुभ्रु समाकम्पात्कादम्बश्चुम्बति प्रियाम् ॥'

**विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्यते ।**

यथा—गृहवृक्षवाटिकायाम्,

'दृश्येते तन्वि यावेतौ चारुचन्द्रमसं प्रति ।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू ॥'

**स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥ १९४ ॥**

यथा शाकुन्तले—

'उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु सम्पदः ॥' (७.३०)

अथ नाट्यालङ्काराः—

**आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।**
**उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः ॥ १९५ ॥**
**आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।**
**उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥ १९६ ॥**
**प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्तनम् ।**
**उत्कीर्तनं तथा याच्ञा परिहारो निवेदनम् ॥ १९७ ॥**
**प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।**
**इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥ १९८ ॥**
**आशीरिष्टजनाशंसा**

यथा शाकुन्तले—'ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥' (४.६)

**आक्रन्दः प्रलपितं शुचा ।**

यथा वेण्याम् (६.२६ इत्यस्मात्परं) '**कञ्चुकी**—हा देवि कुन्ति, राजभवन-पताके—' इत्यादि ।

**कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥ १९९ ॥**

यथा कुलपत्यङ्के—

'मृगरूपं परित्यज्य विधाय कपटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥'

**अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते ।**

यथा शाकुन्तले (पञ्चमेऽङ्के)—'**राजा**—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिः । किं पुनरिमामतिसन्धाय लभ्यते । **शार्ङ्गरवः**—विनिपातः—' इत्यादि ।

**गर्वोऽवलेपजं वाक्यं**

---

१ 'विशेषार्थोहमवतो' ग; 'विशेषार्थोतिमवतो' ख.

यथा तत्रैव (शाकुन्तले षष्ठे)—'राजा—अपि नाम सत्त्वैरभिभूयन्ते गृहाः।'

**कार्यस्यारम्भ उद्यमः ॥ २०० ॥**

यथा कुम्भाङ्के—'रावणः—

पश्यामि शोकविवशोऽन्तकमेव तावत्'।

**ग्रहणं गुणवत्कार्यहेतोराश्रय उच्यते।**

यथा विभीषणनिर्भर्त्सनाङ्के—'विभीषणः—राममेवाश्रयिष्यामि' इति।

**उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि ॥ २०१ ॥**

यथा शाकुन्तले (५.२९ इत्यस्मात् प्राक्)—'शार्ङ्गरवः—राजन्, अथ पुनः पूर्ववृत्तान्तमन्यसङ्गाद्विस्मृतो भवान्। तत्कथमधर्मभीरोर्दारपरित्यागः—' इत्यादि।

**आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा।**

यथा तत्रैव—'राजा—

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः॥'

**अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥ २०२ ॥**

यथा—'त्वया तपस्विचाण्डाल[1] प्रच्छन्नवधवर्तिना।
न केवलं हतो वाली स्वात्मा च परलोकतः॥'

**मोहावधीरितार्थस्य पश्चात्तापः स एव तु।**

यथानुतापाङ्के—'रामः—

किं देव्या न विचुम्बितोऽसि बहुशो मिथ्याभिशप्तस्तदा' इति।

**उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥ २०३ ॥**

यथा वध्यशिलायाम्—

'म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः॥' (नागा० ४.१६)

**आशंसनं स्यादाशंसा**

यथा श्मशाने—'माधवः—

तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्' इति (मालती० ५.९)।

**प्रतिज्ञाध्यवसायकः।**

यथा मम प्रभावत्याम्—'वज्रनाभः—

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया।
लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः॥'

**विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम् ॥ २०४ ॥**

यथा वेण्याम्—'एकस्य तावत्पाकोऽयम्—' इत्यादि (३.१४)।

**कार्यदर्शनमुल्लेख**

---

१ 'तपश्चर॰' ग.

यथा शाकुन्तले (प्रथमाङ्के)—राजानं प्रति 'तापसौ—समिदाहरणाय प्रस्थितावावाम्। इह चास्मद्गुरोः साधिदैवत इव शकुन्तलयानुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यः कार्यातिपातः, प्रविश्य गृह्यतामतिथिसत्कारः' इति।

**उत्तेजनमितीष्यते।**
**स्वकार्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ॥ २०५ ॥**

यथा—'इन्द्रजिच्चण्डवीर्योऽसि नाम्नैव बलवानसि।
धिग्धिक्प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः ॥'

**भर्त्सना तु परीवादो**

यथा चतुर्थाङ्के—'दुर्योधनः—धिग्धिक् सूत, किं कृतवानसि।
वत्सस्य मे प्रकृतिदुर्ललितस्य पापः
पापं विधास्यति—' इत्यादि (वेणी० ४.५)।

**नीतिः शास्त्रेण वर्तनम्।**

यथा शाकुन्तले—'दुष्यन्तः—विनीतवेषप्रवेश्यानि तपोवनानि।' (प्रथमाङ्के) इति।

**उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा ॥ २०६ ॥**
**उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम्।**

यथा शाकुन्तले राजानं प्रति 'शार्ङ्गरवः—आः, कथमिदं नाम। किमुपन्यस्तमिति। ननु भवानेव नितरां लोकवृत्तान्तनिष्णातः।
सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥' (५.१७)

**प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ २०७ ॥**

यथा बालरामायणे—
'कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि।
तज्जगत्त्रितयं त्रातुं तात ताडय ताडकाम् ॥'

**साहाय्यं सङ्कटे यत्स्यात्सानुकूल्यं परस्य च।**

यथा वेण्याम्—कृपं प्रति 'अश्वत्थामा—त्वमपि तावद्राज्ञः पार्श्ववर्ती भव। कृपः—वाञ्छाम्यहमद्य प्रतिकर्तुम्—' इत्यादि (तृतीयाङ्कान्ते)।

**अभिमानः स एव स्यात्**

यथा तत्रैव—'दुर्योधनः—
मातः किमप्यसदृशं कृपणं वचस्ते' इत्यादि (वेणी० ५.३)

**प्रश्रयादनुवर्तनम् ॥ २०८ ॥**

**अनुवृत्तिः**

यथा शाकुन्तले (१.२० इत्यस्यानन्तरं)—'राजा—(शकुन्तलां प्रति।) अपि, तपो वर्धते। अनसूया—दाणिं अदिधिविसेसलाहेण' इत्यादि।

---

१ 'उपालम्भविशेषेण' नि. २ 'सतीमिमां ज्ञातिकुले' ग. ३ [illegible] ग.

भूतकार्याख्यानमुत्कीर्तनं मतम् ।

यथा बालरामायणे—

'अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।' इत्यादि ( १०.२० )

**याच्ञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा ॥ २०९ ॥**

यथा—

'अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।
शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान् ॥'

**परिहार इति प्रोक्तः कृतानुचितमार्जनम् ।**

यथा—

'प्राणप्रयाणदुःखार्तं उक्तवानस्म्यनक्षरम् ।
तत्क्षमस्व विभो, किं च सुग्रीवस्ते समर्पितः ॥'

**अवधीरितकर्तव्यकथनं तु निवेदनम् ॥ २१० ॥**

यथा राघवाभ्युदये—'लक्ष्मणः—'आर्य, समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि । तत्किमेतत् ।'

**प्रवर्तनं तु कार्यस्य यत्स्यात्साधुप्रवर्तनम् ।**

यथा वेण्याम्—'राजा—कञ्चुकिन्, देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्तन्तां तत्रोचिताः समारम्भाः ।' ( ६.१२ इत्यस्यात्परं )

**आख्यानं पूर्ववृत्तोक्तिर्**

यथा तत्रैव—

'देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः' इत्यादि ( वेणी० ३.३३ )

**युक्तिरर्थावधारणम् ॥ २११ ॥**

यथा तत्रैव—

'यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वम् ॥' (वेणी० ३.६)

**प्रहर्षः प्रमदाधिक्यं**

यथा शाकुन्तले—'राजा—तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि ।'

**शिक्षा स्यादुपदेशनम् ।**

यथा तत्रैव ( शा० १ ) 'सहि, ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणम् ।' ( सखि न युक्तमाश्रमवासिनो जनस्याकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम् )

एषां च लक्षणं नाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण । एषु च केषांचिद्गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्तव्यत्वात्तद्विशेषोक्तिः । एतानि च—

१ 'भवद्यात्वं' ग.

'पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम् ॥
महारसं महाभोगमुदात्तरचनान्वितम् ।
महापुरुषसत्कारं साध्वाचारं जनप्रियम् ॥
सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥' (नाट्य० १९.११२–११५)

इति मुनिनोक्तत्वान्नाटकेऽवश्यं कर्तव्यान्येव । वीथ्यङ्गानि वक्ष्यन्ते ।

लास्याङ्गान्याह—

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ॥ २१२ ॥
प्रच्छेदकं त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ।
उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ॥ २१३ ॥
लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ।

(नाट्य० १८.१७०–१७१)

तत्र—

तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ॥ २१४ ॥
शुष्कं गानं गेयपदं

यथा—गौरीगृहे वीणां वादयन्ती 'मलयवती'—

'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥' (नागा. १.१४)

स्थितपाठ्यं तदुच्यते ।
मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ॥ २१५ ॥

अभिनवगुप्तपादास्त्वाहुः—'उपलक्षणं चैतत् । क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्' इति ।

निखिलातोद्यरहितं शोकचिन्तान्विताबला ।
अप्रसाधितगात्रं यदासीनासीनमेव तत् ॥ २१६ ॥
आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।
स्त्रीपुंसयोर्विपर्यासचेष्टितं पुष्पगण्डिका ॥ २१७ ॥
अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ॥ २१८ ॥
स्त्रीवेषधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ।

यथा मालत्याम् (षष्ठे) 'मकरन्दः—एषोऽस्मि मालती संवृत्तः ।'

कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ॥ २१९ ॥
प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं विदुः ।

करणं वीणादिक्रिया ।

---

१ 'युष्मत्प्रसादेन' नि.　२ 'त्रिमूढं' इति नाट्यशास्त्रे.　३ 'संवृत्तमकरन्दमालति' ग.

चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ॥ २२० ॥
द्विमूढं रसभावाढ्यमुत्तमोत्तमकं पुनः ।
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ॥ २२१ ॥
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ।
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ॥ २२२ ॥
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ।

स्पष्टान्युदाहरणानि ।

एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ॥ २२३ ॥
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ।

एतदेव नाटकम् । यथा—बालरामायणम् । अथ प्रकरणम्—

भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ॥ २२४ ॥
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्मकामार्थपरो धीरप्रशान्तकः ॥ २२५ ॥

विप्रनायकं यथा मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम् । वणिङ्नायकं पुष्पभूषितम् ।

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥ २२६ ॥
कितवद्यूतकारादिविटचेटकसंकुलः ।

कुलस्त्री पुष्पभूषिते । वेश्या तु रङ्गवृत्ते[1] । द्वे अपि मृच्छकटिके । अस्य नाटकप्रकृतित्वाच्छेषं नाटकवत् ।

अथ भाणः—

भाणः स्याद्धूर्तचरितो नानावस्थान्तरात्मकः ॥ २२७ ॥
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।
रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा ॥ २२८ ॥
सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः ॥ २२९ ॥
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥ २३० ॥

अत्राकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्यवर्णनया सूचयेत् । प्रायेण भारती क्वापि कैशिकी वृत्तिर्भवति । लास्याङ्गानि गेयपदादीनि । उदाहरणं लीलामधुकरः । अथ व्यायोगः—

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ॥ २३१ ॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।

---

१ 'रङ्गवृत्ते' मि.

कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥ २३२ ॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥ २३३ ॥

यथा सौगन्धिकाहरणम् । अथ समवकारः—

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् ।
सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे ॥ २३४ ॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः ।
नायका द्वादशोदात्ताः प्रख्याता देवमानवाः ॥ २३५ ॥
फलं पृथक्पृथक्तेषां वीरमुख्योऽखिलो रसः ।
वृत्तयो मन्दकैशिक्यो नात्र बिन्दुप्रवेशकौ ॥ २३६ ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च ॥ २३७ ॥
त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः ।
वस्तु द्वादशनालीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥ २३८ ॥
द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके ।

नालिका घटिकाद्वयमुच्यते । बिन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ । तत्र—

धर्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः ॥ २३९ ॥
स्वाभाविकः कृत्रिमश्च दैवजो, विद्रवः पुनः ।
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥ २४० ॥

तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः । अर्थलाभार्थकल्पितोऽर्थशृङ्गारः । प्रहसनशृङ्गारः कामशृङ्गारः । तत्र कामशृङ्गारः प्रथमाङ्क एव । अन्ययोस्तु न नियम इत्याहुः । चेतनाचेतना गजादयः । समवकीर्यन्ते बहवोऽर्था अस्मिन्निति समवकारः । यथा—समुद्रमथनम् । अथ डिमः—

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ॥ २४१ ॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥ २४२ ॥
नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ २४३ ॥
वृत्तयः कैशिकीहीना निर्विमर्शाश्च सन्धयः ।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥ २४४ ॥

अत्रोदाहरणं च 'त्रिपुरदाहः' इति महर्षिः । अथेहामृगः—

---

१ 'पुनः' ग. २ '°नानार्थकल्पितः' नि—च. ३ धनिकेन दशरूपकव्याख्याने (३.५७–६०) उक्तं 'इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् । ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥' इति भरतमुनिना च कथितं त्रिपुरदाहेतिवृत्तस्य तुल्यत्वं दर्शितम् ।'

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥ २४५ ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो गूढभावादयुक्तकृत् ॥ २४६ ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत् ॥ २४७ ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्तयेत्[1] ॥ २४८ ॥
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ॥ २४९ ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

मिश्रं ख्याताख्यातम् । अन्त्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः । यथा—कुसुमशेखरविजयादिः । अथाङ्कः—

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ॥ २५० ॥
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।
प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ॥ २५१ ॥
भाणवत्सन्धिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ ।
युद्धं च वाचा कर्तव्यं निर्वेदवचनं बहु ॥ २५२ ॥

इमं च केचित् नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थमुत्सृष्टिकाङ्कनामानमाहुः । अन्ये तु—[2]'उत्क्रान्ता विलोमरूपा सृष्टिर्यत्रेत्युत्सृष्टिकाङ्कः ।' यथा—शर्मिष्ठाययातिः । अथ वीथी—

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥ २५३ ॥
सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान्रसानपि ।
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥ २५४ ॥

कश्चिदित्युत्तमो[3] मध्यमोऽधमो वा । शृङ्गारबहुलत्वाच्चास्याः कैशिकीवृत्तिबहुलत्वम् ।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥ २५५ ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृद(मार्द?)वानि च तानि तु ॥ २५६ ॥

तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं कथिते ।

मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ।

---

१ '°वर्तेत' नि–ब. २ तथा चाभिनवोक्तं (ह० ३.४४–४५) 'उत्सृष्टिकाङ्क इति नाटकान्तर्गताङ्कव्यवच्छेदार्थम्'. ३ 'कश्चिदुत्तमो' नि.

यथा विक्रमोर्वश्याम्—उर्वशीमाविष्कुर्वन्नित्यौत्सुक्यमौन्माद्यवचनम् ।

त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥ २५७ ॥

यथा तत्रैव—'राजा—

सर्वक्षितिभृतां नाथ, दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥ (विक्रमो० ४.२७)

(नेपथ्ये तत्रैव प्रतिशब्दः) राजा—कथं दृष्टेत्याह ।'
अत्र प्रश्नवाक्यस्यैवोत्तरवाक्यत्वेन योजितम् । 'नटादित्रितयविषयमेवेदम्' इति केचित् ।

प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलनाच्छलम् । (दश. ३.१७)

यथा वेण्याम्—'भीमार्जुनौ—

कर्ता द्यूतच्छलानां, जतुमयशरणोद्दीपनः, सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः, पाण्डवा यस्य दासाः
क्वास्ते दुर्योधनोऽसौ कथयत, न रुषा द्रष्टुमभ्यागतौ स्वः ॥' (५.२२)

अन्ये त्वाहुश्छलं किञ्चित्कार्यमुद्दिश्य कस्यचित् ॥ २५८ ॥
उदीर्यते यद्वचनं वञ्चनाहास्यरोषकृत् ।
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥ २५९ ॥

द्वित्र्युक्त्युपलक्षणम् । यथा—

'भिक्षो मांसनिषेवणं प्रकुरुषे, किं तेन मद्यं विना
मद्यं चापि तव प्रियं, प्रियमहो वाराङ्गनाभिः सह ।
वेश्याप्यर्थरुचिः कुतस्तव धनं, द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतो, नष्टस्य कान्या गतिः ॥'

केचित्—'प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलिः' इत्याहुः (दश० ३.१७)
अन्ये च 'अनेकस्य प्रश्नस्यैकमुत्तरम् ।'

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं मतम् । (दश. ३.१८)

यथा मम प्रभावत्याम्—'वज्रनाभः—

अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः ॥

प्रद्युम्नः—अरे असुरापसद, अलममुना बहुप्रलापेन । मम खलु

अद्य प्रचण्डभुजदण्डसमर्पितोरुकोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं क्षोणिः क्षणेन पिशिताशनलोभनीया ॥'

---

१ '॰तरत्येव' लि—छ. २ दशरूपके तु—'श्रुतिसाम्यादनेकार्थयोजनं, त्रिगतं त्विह । नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥' (३.१६) ३ 'छलना छलम्' ग. ४ 'च' ग. ५ 'उदञ्च-त्' ग. ६ 'किं ते मद्यमपि प्रियं' ग. ७ 'वाराङ्ग॰' लि—च. ८ दशरूपके (३.१७ इत्यत्र) नटादित्रितय॰. ९ '॰न्मूलयामि' ग; '॰लीलयोन्मूलयाम्येव भुवनद्वय॰' ग.

भूयस्त्वद्दर्शनादेव मैवैते सफलतां गताः ॥'
'तस्मात्त्वद्रूपसौन्दर्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥'

एतानि चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि स्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि वीथीव नानारसानां चात्र मालारूपतया स्थितत्वाद्वीथीयम् । यथा—मालविका । अथ प्रहसनम्—

**भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् ।**
**भवेत्प्रहसने वृत्तं निन्द्यानां कविकल्पितम् ॥ २६४ ॥**

अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ ।

**अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ।**

तत्र

**तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ॥ २६५ ॥**
**एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ।**

यथा—कन्दर्पकेलिः ।

**आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद्विदुः ॥ २६६ ॥**

यथा—धूर्तचरितम् ।

**वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।**
**तत्पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥ २६७ ॥**

यथा—लटकमेलकादिः । मुनिस्त्वाह—

'वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।
अविकृतवेषपरिच्छदचेष्टितकरणं तु सङ्कीर्णम् ॥' इति । (नाट्य० १८.१०२)

**विकृतं तु विदुर्यत्र षण्ढकञ्चुकितापसाः ।**
**भुजङ्गचारणभटप्रभृतेर्वेषवाग्युताः ॥ २६८ ॥**

इदं तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथङ्नोक्तम् । अथोपरूपकाणि । तत्र—

**नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका ।**
**प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥ २६९ ॥**
**स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा ।**
**नवानुरागा कन्यात्र नायिका नृपवंशजा ॥ २७० ॥**
**संप्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।**
**देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ २७१ ॥**
**पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।**
**वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः सन्धयः पुनः ॥ २७२ ॥**

द्वयोर्नायिकानायकयोः । यथा—रत्नावली-विद्धशालभञ्जिकादिः । अथ त्रोटकम्—

---

१ 'भूयस्त्वं' ख. २ '°दर्शनादेव' लि-ख. ३ 'सफलं कृतं' लि-ख. ४ '°प्रभृतिष्वत्र' लि-ख. ५ 'धृष्टानां' लि.

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥ २७३ ॥

प्रत्यङ्कसविदूषकत्वादत्र शृङ्गारोऽङ्गी । सप्ताङ्कं यथा—स्तम्भितरम्भम् । पञ्चाङ्कं यथा—विक्रमोर्वशी । अथ गोष्ठी—

प्राकृतैर्नवभिः पुम्भिर्दशभिर्वाप्यलङ्कृता ।
नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी ॥ २७४ ॥
हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता ।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ॥ २७५ ॥

यथा—रैवतमदनिका । अथ सट्टकम्—

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ॥ २७६ ॥
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ।

यथा—कर्पूरमञ्जरी । अथ नाट्यरासकम्—

नाट्यरासकमेकाङ्कं बहुताललयस्थिति ॥ २७७ ॥
उदात्तनायकं तद्वत्पीठमर्दोपनायकम् ।
हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका ॥ २७८ ॥
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।
केचित्प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ॥ २७९ ॥

तत्र सन्धिद्वयवती यथा—नर्मवती । सन्धिचतुष्टयवती यथा—विलासवती । अथ प्रस्थानकम्—

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कैशिकी भारती तथा ॥ २८० ॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥ २८१ ॥

यथा—शृङ्गारतिलकम् । अथोल्लाप्यम्—

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणै रसैः ॥ २८२ ॥
उल्लाप्यं बहुसंग्रामं अस्त्रगीतमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥ २८३ ॥

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा—देवीमहादेवम् । अथ काव्यम्—

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृतम् ॥ २८४ ॥
वर्णमात्राच्छड्डिकायुतं शृङ्गारभाषितम् ।

---

१ 'स्तम्भितरम्भम्' ग. २ 'नोदात्तवचना' ग. ३ 'अस्त्र' ग. ४ '°शस्त्रगीत°' लि. ५ '°च्छड्डिका' लि; 'भाणाच्छिगिका' ग.

नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ॥ २८५ ॥

यथा—यादवोदयः । अथ प्रेङ्खणम्—

गर्भावमर्शरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ॥ २८६ ॥
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ॥ २८७ ॥

यथा—वालिवधः । अथ रासकम्—

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।
भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतम् ॥ २८८ ॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम् ।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ॥ २८९ ॥
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।
इह प्रतिमुखं सन्धिमपि केचित्प्रचक्षते ॥ २९० ॥

यथा—मेनकाहितम् । अथ संलापकम्—

संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ॥ २९१ ॥
भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कैशिकी ॥ २९२ ॥

यथा—मायाकापालिकम् । अथ श्रीगदितम्—

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ॥ २९३ ॥
भारतीवृत्तिबहुलं श्रीतिशब्देन संकुलम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥ २९४ ॥

यथा—क्रीडारसातलम् ।

श्रीरासीना श्रीगदिते गायेत्किंचित्पठेदपि ।
एकाङ्को भारतीप्राय इति केचित्प्रचक्षते ॥ २९५ ॥

ऊह्यमुदाहरणम् । अथ शिल्पकम्—

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ॥ २९६ ॥
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।
सप्तविंशतिरङ्गानि भवन्त्यस्य तानि तु ॥ २९७ ॥
आशंसातर्कसन्देहतापोद्वेगप्रसक्तयः ।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥ २९८ ॥
विलासालस्यबाष्पाणि प्रहर्षाश्वासमूढताः ।

---

१ [illegible] ग.  २ 'तथा कलान्वितम्' ग.  ३ 'श्रीरासीना' इत्यारभ्य 'ऊह्यमुदाहरणम्' इत्यन्तं ग-पुस्तके नास्ति.  ४ '°स्यबाष्पाणि' ग-घ.  ५ '°हर्षाश्वास°' घ.

नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ॥ ३२१ ॥
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥ ३२२ ॥
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ॥ ३२३ ॥
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ॥ ३२४ ॥
नामास्य सर्गोपादेयकथया सर्गनाम तु ।

सन्ध्यङ्गानि यथालाभमत्र विधेयानि । 'अवसानेऽन्यवृत्तकैः' इति बहुवचनमविवक्षितम् । साङ्गोपाङ्गा इति जलकेलिमधुपानादयः । यथा—रघुवंश-शिशुपालवध-नैषधादयः । यथा वा मम—राघवविलासादिः ।

अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः ॥ ३२५ ॥

अस्मिन्महाकाव्ये । यथा—महाभारतम् ।

प्राकृतैर्निर्मिते तस्मिन्सर्गा आश्वाससंज्ञकाः ।
छन्दसा स्कन्धकेनैतत्क्वचिद्गलितकैरपि ॥ ३२६ ॥

यथा—सेतुबन्धः । यथा वा मम—कुवलयाश्वचरितम् ।

अपभ्रंशनिबद्धेऽस्मिन्सर्गाः कडवकाभिधाः ।
तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि ॥ ३२७ ॥

यथा—कर्णपराक्रमः ।

भाषाविभाषानियमात्काव्यं सर्गसमुज्झितम् ।
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ॥ ३२८ ॥

यथा—भिक्षाटनम्, आर्याविलासश्च ।

खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च ।

यथा—मेघदूतादिः ।

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ॥ ३२९ ॥
व्रज्याक्रमेण रचितः स एवातिमनोरमः ।

सजातीयानामेकत्र संनिवेशो व्रज्या । यथा—मुक्तावल्यादि । अथ गद्यकाव्यानि । तत्र गद्यम्—

वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ॥ ३३० ॥
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ।
आद्यं समासरहितं वृत्तभागयुतं परम् ॥ ३३१ ॥

---

१ 'स्कन्धकेन' ग. २ '°निबद्धेन' ग. ३ 'कुडवका°' नि; 'कडवका' ग. ४ '°समुज्झितम्' नि. ५ '°भवनं' ग. ६ 'कुलकशो' ग-घ. ७ 'कुलकं' ग.

अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम्।

मुक्तकं यथा—'गुरुर्वचसि पृथुरुरसि—' ( हर्षचरित ३.१६ ) इत्यादि।

वृत्तगन्धि यथा मम—'समरकण्डूलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनी-टङ्कारोज्जागरितवैरिनगर—' इत्यादि। अत्र 'कुण्डलीकृतकोदण्ड—' इत्यनुष्टुब्वृत्तस्य पादः, 'समरकण्डूल' इति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः।

उत्कलिकाप्रायं यथा ममैव—'अणिसविसुमरणिसिदसरविसरविदलिदसमरपरिगदपवरपरबल—' इत्यादि ( अनिशविस्मरनिशितशरविसरविदलितसमरपरिगतप्रवरपरबल )। चूर्णकं यथा मम—'गुणरत्नसागर जगदेकनागर कामिनीमदन जनरञ्जन' इत्यादि।

कथायां सरसं वस्तु पद्यैरेव विनिर्मितम् ॥ ३३२ ॥
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥ ३३३ ॥

यथा—कादम्बर्यादिः।

आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम्।
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित् ॥ ३३४ ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥ ३३५ ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।

यथा—हर्षचरितादिः। 'अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।' इति (काव्यादर्शे १.२५) दण्ड्याचार्यवचनात्केचित् 'आख्यायिका नायकेनैव निबद्धव्या' इत्याहुः, तदयुक्तम्। आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः। यदुक्तं दण्डिनैव—'अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः।' इति ( काव्यादर्शे १.२८ )। एषामुदाहरणम्—पञ्चतन्त्रादि। अथ गद्यपद्यमयानि—

गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ ३३६ ॥

यथा—देशराजचरितम्।

गद्यपद्यमयी राजस्तुतिर्बिरुदमुच्यते।

यथा—विरुदमणिमाला।

करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥ ३३७ ॥

यथा मम—षोडशभाषामयी प्रशस्तिरत्नावली। एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः॥

इति श्रीसाहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः।

---

१ 'मण्डलीकृत' ग. २ 'मण्डलीकृत'० ग. ३ 'कुलकं' ग. ४ 'जनचित्तरञ्जन' ग. ५ 'गद्यैरेव' नि. ६ 'बोध्यते' ग. ७ भामहादयः 'गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता॥ वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम्……कन्याहरणसंग्राम…… ॥ ……कथ्यते॥' भामह १.२५–२९.

## सप्तमः परिच्छेदः ।

इह प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिक्रमो दर्शितः । संप्रति के त इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—

**रसापकर्षका दोषास्**

अस्यार्थः प्रागेव स्फुटीकृतः । तद्विशेषानाह—

**ते पुनः पञ्चधा मताः ।**
**पदे तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत् ॥ १ ॥**

स्पष्टम् । तत्र

**दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।**
**ग्राम्याप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥ २ ॥**
**अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।**
**अविमृष्टविधेयांशभावश्च पदवाक्ययोः ॥ ३ ॥**
**दोषाः, केचिद्भवन्त्येषु पदांशेऽपि, पदे परम् ।**
**निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥ ४ ॥**

परुषवर्णतया श्रुतिदुःखावहत्वं **दुःश्रवत्वम्** । यथा—'कार्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा ।' **अश्लीलत्वं** व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्त्रिविधम् । क्रमेणोदाहरणम्—

'दृप्तारिविजये राजन्साधनं सुमहत्तव ।'
'प्रससार शनैर्वायुर्विनाशे तन्वि ते तदा ।'

अत्र साधन-वायु-विनाशशब्दा अश्लीलाः । 'शूरा अमरतां यान्ति पशुभूता रणाध्वरे' अत्र पशुपदं कातर्यमभिव्यनक्तीत्य**नुचितार्थत्वम्** । **अप्रयुक्तत्वं** तथाप्रसिद्धावपि कविभिरनादृतत्वम् । यथा—'भाति पद्मः सरोवरे ।' अत्र पद्मशब्दः पुंलिङ्गः । **ग्राम्यत्वं** यथा—'कटिस्ते हरते मनः ।' अत्र कटिशब्दो ग्राम्यः । **अप्रतीतत्वमे**कदेशमात्रप्रसिद्धत्वम् । यथा—'योगेन दलिताशयः ।' अत्र योगशास्त्र एव वासनार्थ आशयशब्दः । 'आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ।' अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयायामिति **सन्देहः** । **नेयार्थत्वं** रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम् । यथा—'कमले चरणाघातं मुखं सुमुखि तेऽकरोत् ।' अत्र चरणाघातेन निर्जितत्वं लक्ष्यम् । **निहतार्थत्वमु**भयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः । यथा—

'यमुनाशम्बरमम्बरं व्यतानीत् ।' शम्बरशब्दो दैत्ये प्रसिद्धः । इह तु जले निहतार्थः । 'गीतेषु कर्णमादत्ते' अत्राङ्-पूर्वो दाञ्-धातुर्दानार्थे**ऽवाचकः** । यथा वा—

'दिनं मे त्वयि संप्राप्ते ध्वान्तच्छन्नापि यामिनी ।'

अत्र दिनमिति प्रकाशमयार्थेऽवाचकम् । **क्लिष्टत्वमर्थ**प्रतीतेर्व्यवहितत्वम् । यथा—

---

१ 'निहतं' ग. २ 'पदे' वि. ३ 'हरति' ख. ४ 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' (योगसूत्र १-२४ इत्यत्र) ५ 'दृप्तासु' क-ख. ६ '°वाचकः' ख.

'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः ।' अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि । 'मूर्ध्न्यस्तु भवानीशः' । अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकृत् । अविमृष्टविधेयांशत्वं यथा—'स्वर्णग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ।' अत्र वृथात्वं विधेयम्, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत् । यथा वा—'रक्षांस्यपि पुरः स्थातुमलं रामानुजस्य मे ।' अत्र रामस्येति वाच्यम् । यथा वा—

'आसमुद्रक्षितीशानाम्' ( रघु० १.५ ) अत्रासमुद्रमिति वाच्यम् । यथा वा—'यत्र ते पतति सुभ्रु कटाक्षः षष्ठबाण इव पञ्चशरस्य ।' अत्र षष्ठ इवेत्युत्प्रेक्ष्यम् । यथा वा—'अमुक्ता भवता नाथ मुहूर्तमपि सा पुरा ।'

अत्रामुक्तत्वे नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम् । यदाहुः—

'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥'

यथा—'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः ।' ( विक्रमो० ४.१ )

उक्तोदाहरणे[1] तु तत्पुरुषसमासे गुणीभावेन[2] नञः पर्युदासतया निषेधस्य विधेयतयानवगमः । यदाहुः—

'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥'

तेन

'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥' ( रघु० १.२१ )

अत्रात्रस्ततादीनामनूद्यत्वेन गोपनाद्येव विधेयमिति नञः पर्युदासतया गुणभावो युक्तः । ननु 'अश्राद्धभोजी[3] ब्राह्मणः' 'असूर्यंपश्या राजदाराः' इत्यादिवत् 'अमुक्ता' इत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति[4] चेत्, न । तत्रापि[5] यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा । विशेष्यतया प्रधानेन तद्भोक्त्रंशेन कर्त्रंशेनैव नञः सम्बन्धात्[6] । यदाहुः—

'श्राद्धभोजनशीलो हि यतः कर्ता प्रतीयते ।
न तद्भोजनमात्रं तु कर्तरीनेर्विधानतः[7] ॥' इति ।

'अमुक्ता' इत्यत्र तु क्रिययैव सह सम्बन्ध इति दोष एव । एते च क्लिष्टत्वादयः समासगता एव पददोषाः । वाक्ये दुःश्रवत्वं यथा—

'स्मरार्त्तान्धः कदा लप्स्ये कार्तार्थ्यं विरहे तव ।'
'कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते ॥'

अत्र जुगुप्साव्यञ्जकाश्लीलता ।

---

१ 'अत्रोदाहरणे' ख. २ 'गुणीभावे' लि-ख. ३ 'अश्राद्धभोज्यसूर्यं' ख-ग. ४ 'भवतीति' लि. ५ 'अत्रापि' लि-ख. ६ 'सम्बद्धत्वात्' ग-ख. ७ 'मात्रं कर्तरि णिनेर्विधानादिति' ग-ख.

'उपलकमलकेलीहितैर्वकाभिर्भूषिता तनुः ।'

अत्र कमलकेलीहितं पद्मरागः । बकाभिर्हीराभिः । इति नेयार्थता ।

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धः क्लिष्टः ।

'न्यक्कारो ह्ययमेव मे यदरयः' इति । अत्र चायमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् । तच्च शब्दरचनाविपर्यासेन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः । 'आनन्दयति ते नेत्रे योऽधुना समुपागतः ।' इत्यादिषु 'यत्तदोर्नित्यः सम्बन्धः' इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददःशब्दा विधेया एव भवितुं युक्ताः । अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत् । तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम् । यथा—

'यः स ते नयनानन्दकारः सुभ्रु स आगतः ।' यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति । यथा—'आनन्दयति ते नेत्रे योऽधुनासौ समागतः ॥' एवमिदमादिशब्दोपादानेऽपि । यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति, तत्रैकस्योपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः । तथाहि यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थत्वम् । यथा—'आत्मा जानाति यत्पापम्'। एवम्—'यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च—' ( कुमार० १.२ ) इत्यादावपि । तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् । क्रमेण यथा—

'स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत्' ॥ ( रघु० १२.५८ )

'स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम् ।'

'तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि ।'

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव । क्रमेण यथा—

'विभाति मृगशावाक्षी येदं भुवनभूषणम् ।'

'इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः ।'

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः । यथा—

'न मे शमयिता कोऽपि भारस्येत्युर्वि मा शुचः ।

---

१ [illegible] इत्यधिकं ख-पुस्तके. २ काव्यप्रकाशे [illegible] उदाहरणमिदं [illegible] ( ७.१.२२ ). ३ [illegible] परिच्छेदे उदाहरणमिदम्. ४ 'नियतसम्बन्धः' ख-ग. ५ 'तदेकस्यो' ग. ६ 'यो' लि.

नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः ॥'

अत्र योऽस्ति, स ते कालस्य शमयितेति बुध्यते । 'यद्विरहदुःखं मे तत्को वापहरिष्यति ।' इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम् । तथाहि— यदित्यनेन येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम् । तथाभूतस्य तस्य तच्छब्देन परामर्शः । एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम् ।

पदांशे श्रुतिकटु यथा—'तद्गच्छ सिद्ध्यै कुरु देवकार्यम् (कुमार० ३.१८) ।' 'धातुमत्ता गिरिर्धत्ते ।' अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः । 'वर्ण्यते किं महासेनो विजेयो यस्य तारकः ।' अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः । 'पाणिः पल्लवपेलवः ।' अत्र पेलवशब्दस्याद्याक्षरे अश्लीले । 'संग्रामे निहताः शूरा वचो बाणत्वमागताः ।' अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम् । तथा तत्रैव बाणस्थाने शरेति पाठे । अत्र पदद्वयमपि न परिवृत्तिसहम् । जलध्यादौ तु उत्तरपदं वैद्यानल्याद्रौ पूर्वपदम् । एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः । निरर्थकत्वादीनां त्रयाणां च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः । क्रमेण यथा—'मुञ्च मानं हि मानिनि ।' अत्र हिशब्दो वृत्तपूरणमात्रप्रयोजनः । 'कुञ्जं हन्ति कृशोदरी ।' अत्र हन्तीति गमनार्थे पठितमपि न तत्र **समर्थम्** । 'गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः (किराता० १७.६३) ।' 'आङो यमहनः' (पा० १.३.२८), 'स्वाङ्गकर्मकाच्च' इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम् । इह तु तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम् । नन्वत्र 'आजघ्ने' इति पदस्य स्वतो न दुष्टता, अपि तु पदान्तरापेक्षयैवेत्यस्य वाक्यदोषता । नैवम् । तथाहि गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः । इह तु दोषस्य 'आजघ्ने' इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम् । पदान्तराणां परिवर्तनेऽपि तस्य तादवस्थ्यादेव इति पददोष एव । तथा यत्रैवात्मनेपदस्य परिवृत्तावपि न पददोषः, तथा इन्द्रकृतेरपीति न पदांशे दोषः । एवं 'पमः' इत्यप्रयुक्तस्य पदगतत्वं बोध्यम् । एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम् ।

इह तु शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वम् । विरलप्रयोगे निहतार्थत्वम् । निहतार्थत्वमनेकार्थशब्दविषयम् । अप्रतीतत्वं त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः । अप्रयुक्तत्वमेकार्थशब्दविषयम् । असमर्थत्वमनेकार्थशब्दविषयम् । असमर्थत्वे हन्त्यादयो गमनार्थे पठिताः । अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे न तथेति परस्परभेदः । एवं पददोषसजातीया वाक्यदोषा उक्ताः । संप्रति तद्विजातीया उच्यन्ते ।

वर्णानां प्रतिकूलत्वं, लुप्ताहतविसर्गते ।
अधिकन्यूनकथितपदताहतवृत्तताः ॥ ५ ॥
पतत्प्रकर्षता, सन्धौ विश्लेषाश्लीलकष्टताः ।

---

१ 'निहतः' नि. २ 'पेल' इत्यस्य लज्जावाचकत्वं जुगुप्सार्थत्वात्. ३ 'बाणता' नि—ब.
४ कोष्ठकमिदं 'उद्भिन्ना तत' 'आङो यमहनः' इति द्वयोरपि पुस्तकयोरुपलभ्यते. ५ 'गमनार्थेऽपि' प्र.

अर्धान्तरैकपदता समाप्तपुनरात्तता ॥ ६ ॥

अभवन्मतसम्बन्धाक्रमामतपरार्थताः ।

वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा ॥ ७ ॥

त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।

सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः ॥ ८ ॥

वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम् । यथा मम—

'ओवट्टइ उल्लट्टइ सअणे कहिंपि मोट्टाअइ णो परिहट्टइ ।

हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा ॥'

( उद्वर्तयति उल्लोटयति शयने कहिं अपि मोट्टयति
नो परिघट्टयति । हृदयेन स्फिटयति लज्जया खुट्टयति धृतेः सा )

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः । एषां चैकद्वित्रिचतुःप्रयोगे न तादृग्रसभङ्ग इति न दोषः । 'गता निशा इमा बाले ।' अत्र विसर्गा लुप्ताः । आहता ओत्वं प्राप्ता विसर्गा यत्र । यथा—'धीरो वरो नरो याति' इति । 'पल्लवाकृतिरक्तोष्ठी ।' अत्राकृतिपदमधिकम् । एवम्—'सदाशिवं नौमि पिनाकपाणिम् ।' अत्र पिनाकपाणिमिति विशेषणमधिकम् ।

'कुर्यां हरस्यापि पिनाकपाणेः' ( कुमार० ३.१० )

इत्यत्र तु पिनाकपाणिपदं विशेषप्रतिपत्त्यर्थमुपात्तमिति युक्तमेव । यथा—'वाचमुवाच कौत्सः' ( रघु. ५.१२ ) अत्र वाचमित्यधिकम् । उवाचेत्यनेनैव गतार्थत्वात् । क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यतेऽपि । यथा—'उवाच मधुरां वाचम्' इति ।

केचित्त्वाहुः—यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति तथापि तत्प्रयोगो न युज्यते । यथा—'उवाच मधुरं धीमान्' इति । 'यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा ।' अत्र प्रथमे त्वयेति पदं न्यूनम् । 'रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन् ।' अत्र लीलाशब्दः पुनरुक्तः । एवम्—'अङ्कुरितैः फुल्लविकासिविलसद्दलाः' । अत्र विलसच्छब्दस्य फुल्लविस्फुल्लत्वप्रत्यायकत्वा इति सर्वनाम्नैव परामर्शो युक्तः । हतवृत्तं लक्षणानुसरणेऽप्यश्रव्यत्वं रसाननुगुणत्वमप्राप्तगुरुभावान्तलघु च । क्रमेण यथा—

'हन्त सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः ।'

'अयि मयि मानिनि मा कुरु मानम् ।' इदं वृत्तं हास्यरसस्यैवानुकूलम् । 'विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः ।' यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत्सर्वत्र द्वितीयचतुर्थपादविषयम् । प्रथमतृतीयपादविषयं तु वसन्ततिलकादेरेव । अत्र 'समुदितसौरभ आगतो वसन्तः' इति पाठो युक्तः । यथा वा—

'अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा

सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।

---

१ 'लुप्तविसर्गाः' नि–ख. २ "गतार्थत्वात्" ग–ख. ३ 'सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥' इत्युक्तम्.

धीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थला-
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि वै ॥'

अत्र वस्त्राणि वैति बन्धस्य श्लथत्वश्रुतिः । 'वस्त्राण्यपि' इति पाठे तु दार्ढ्यमिति न दोषः । 'इदमप्राप्तगुरुभावान्तलघु' इति काव्यप्रकाशकारः । वस्तुतस्तु 'श्लथानु-प्रासोऽप्यक्रमत्वम्' इत्यन्ये ।

प्रस्फुरज्ज्वलज्ज्वालाविकटोत्कटदंष्ट्रः ।
ध्वान्तक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥'

अत्र क्रमेणानुप्रासप्रकर्षः पतितः । 'दलिते उत्पले एते अक्षिणी अमलाङ्गि ते ।'

एवंविधसन्धिविश्लेषस्यासकृत्प्रयोग एव दोषः । अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि । यथा—'वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत् ।'

'चलण्डामरचेष्टितः' इति । अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वम् ।

'उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।' अत्र सन्धौ कष्टत्वम् ।

'इन्दुर्विभाति कर्पूरगौरैर्धवलयन्करैः ।
जगन्मा कुरु तन्वङ्गि मानं पादानते प्रिये ॥'

अत्र जगदिति प्रथमार्धे पठितुमुचितम् ।

'नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥'

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः । अभवन्मतसम्बन्धो यथा—

'या जयश्रीर्मनोजस्य यया जगदलङ्कृतम् ।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ॥'

अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात्तदेकान्तःपातिनैणाक्षीशब्देनान्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव । 'यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे ।' इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यान्तःपातिभिर्वाक्यैः सम्बन्धो घटते । यथा वा—

'ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभवः ।' अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते । 'ईक्षसे चेत्' इति तु युक्तः पाठः । यथा वा—

'ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च ।
राजति व्योमकासारराजहंसः सुधाकरः ॥'

अत्र कासारशब्दस्य समासे गुणीभावात्तदर्थस्य न सर्वैः संयोगः । विधेयाविमर्शे यदेवाविमृष्टं तदेव दुष्टम् । इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतेः

---

१ काव्यप्रकाशे सप्तमोल्लासे उदाहृतमिदम्. २ 'अनुप्रासः प्रकर्षं पतितः' ग. ३ 'चलण्डामर' इत्यत्र 'चलत्' इति 'डामर' इत्यनयोः सन्धौ 'लण्डा' शब्दः प्रतीयते स च पुरीषार्थक इति जुगुप्सा. ४ काव्यप्रकाशे सप्तमोल्लासे उदाहृतमिदम्. ५ इदमर्धान्तरैकपदताया उदाहरणम्. ६ 'कविनिर्दिष्टस्तोऽपि नोपपद्यत इति' ग-घ. ७ "कासारे राज" लि. ८ 'अत्र व्योमकासार" लि.

सर्वोऽपि यः पुरादिपदार्थस्तदङ्गतया न प्रतीयते, इति सर्वेषामर्थविरोधाच्चानयो-
र्वस्तुनयोर्भेदः।

'अनेन च्छिन्दता मातुः कण्ठं परशुना तव।
बद्धस्पर्धः कृपाणोऽयं लज्जते मम भार्गव॥'

अत्र भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनस्य परशुना सह सम्बन्धो न युक्त इति प्राञ्चः। परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयतीत्याधुनिकाः।

**अक्रमता** यथा—

'समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम्।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणीयताम्॥' ( शिशु. ६.४४. )

अत्र प्रयुज्यमानवाक्यानन्तरमेवेतिशब्दो युक्तः, न तु प्रणिगदन्त इत्यनन्तरम्।

यथा—

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥' (कुमा. ५.७१)

अत्र त्वमित्यनन्तरमेव चकारो युक्तः। **अमतपरार्थता** यथा—'राममन्मथशरेण ताडिता—' ( रघु. ११.२० ) इत्यादि। अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः। **वाच्यस्यानभिधानं** यथा—'व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि कुप्यसि।' अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः। न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता। अपेस्तु न तथात्वमित्यनयोर्भेदः। एवमन्यत्रापि। यथा वा—'चरणानतकान्तायास्तन्वि कोपस्तथापि ते।' अत्र 'चरणानतकान्तासि' इति वाच्यम्। **भग्नप्रक्रमता** यथा—'एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत।' अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितम्। तेन 'रावणः प्रत्यवोचत' इति पाठो युक्तः। एवं च सति न कथितपदत्वदोषः, तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात्। इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वम्। यथा—'उदेति सविता ताम्रस्ताम्र एवास्तमेति च।' इत्यत्र यदि रक्त पदेनेति पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा—

'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥' ( कुमार० ६.९४ )

अत्र 'अस्मै' इतीदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन। यथा वा—'उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्।' ( नीतिश० ) अत्र 'मिता भूः पत्यापां स च पतिरपाम्' इति युक्तः पाठः।

एवम्—

---

१ 'निन्दाधिक्यमेव' लि—ख. २ 'परशुसम्बन्धः' ग. ३ 'शब्दप्रयोगो युक्तः' क; 'शब्दप्रयोगो युज्यते' लि. ४ 'कलावती च दिनेशी च नवाङ्गनेकवाक्यता' इत्यधिकं ग—पुस्तके. ५ 'इत्यत्र हि यदि पदान्तरेण' लि; 'इत्यत्र यदि पदा' ख.

'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥' ( किराता० ३.४० )

अत्र 'सुखमीहितुम्' इत्युचितम् । तत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः । तृतीये पर्यायविषयः, चतुर्थे प्रत्ययविषयः । एवमन्यत्रापि ।

**प्रसिद्धित्यागो** यथा—'घोरो वारिमुचां रवः ।' अत्र मेघानां गर्जितमेव प्रसिद्धम् । यदाहुः—

'मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥' (रुद्रट० ६.२५) इत्यादि ।

**अस्थानस्थपदता** यथा—

'तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥' ( रघु० १६.३३ )

अत्र तदीयपदात्पूर्वं गङ्गामित्यस्य पाठो युक्तः । एवम्—'हितान्न यः संशृणुते स किंप्रभुः' ( किराता० १.५ ) अत्र संशृणुत इत्यतः पूर्वं नञः स्थितिरुचिता । अत्र च पदमात्रस्यास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति वाक्यदोषता । एवमन्यत्रापि । इह केऽप्याहुः—'पदशब्देन वाचकमेव प्रायो निरूप्यते, न च नञो वाचकता निर्विवादास्पदत्वेनार्थबोधनविरहात्' इति । यथा—'द्वयं गतम्–' इत्यादौ त्वमित्यनन्तरं चकारानुपादानादक्रमता वक्ष्यमाणेति ।

**अस्थानस्थसमासता** यथा—

'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
त्फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥'

अत्र कोपिन उक्तौ समासो न कृतः । कवेरुक्तौ तु कृतः । वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः **सङ्कीर्णत्वम्** । यथा—'चन्द्रं मुञ्च कुरङ्गाक्षि पश्य मानं नभोङ्गने ।'

अत्र नभोङ्गने चन्द्रं पश्य मानं मुञ्चेति युक्तम् । 'क्लिष्टत्वमेकवाक्यविषयम्' इत्यस्माद्भिन्नम् । वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता । यथा—

'रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥'

अर्थदोषानाह—

**अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।**
**अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥ ९ ॥**
**सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।**

---

१ 'तदीयमिति पदात्' ग. २ '°स्थानविनिवेशेऽपि' ग–ख. 'अत्र तदीय इति पदात्' ख. ३ 'कृपाणी' ग–ख. ४ काव्यप्रकाशे मम्मटेनाप्युदाहृतमिदम्. ५ 'चरणान्ते' ग.

'गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥' ( वेणी० ३.१९ )

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति **निर्हेतुत्वम्** । 'कुमारस्ते नराधीश श्रियं समधिगच्छतु ।'

अत्र 'त्वं म्रियस्व' इति विरुद्धार्थप्रकाशनात्**प्रकाशितविरुद्धत्वम्** । 'अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ।' अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात्**संदिग्धत्वम्** ।

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥' ( किराता० २.३० )

अत्र द्वितीयार्थव्यतिरेकेण द्वितीयपादस्यैवार्थ इति **पुनरुक्तता** । **प्रसिद्धिविरुद्धता** यथा—

'ततश्चचार समरे शितशूलधरो हरिः ।' अत्र हरेः शूलं लोकेऽप्रसिद्धम् । यथा वा—

'पादाघातादशोकस्ते संजाताङ्कुरकण्टकः ।' अत्र पादाघातादशोकेषु पुष्पमेव जायत इति प्रसिद्धं न त्वङ्कुर इति कविसमयख्यातिविरुद्धता । 'अधरे करजक्षतं मृगाक्ष्याः'

अत्र शृङ्गारशास्त्रविरुद्धत्वाद्**विद्याविरुद्धता** । एवमन्यशास्त्रविरुद्धत्वमपि । 'ईशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् । स्त्रीरत्नं च कथं नाम मृष्यते भार्गवोऽधुना ॥' अत्र स्त्रीरत्नमित्युपेक्षितुमित्याकाङ्क्षते ।'

'सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी ।
खलः पूज्यः समज्यायां तापाय मम चेतसः ॥'

अत्र सज्जनः कामिनी च शोभनौ तत्सहचरः खलोऽशोभन इति **सहचरभिन्नत्वम्** ।

'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥' (बालरा० १.३६)

अत्र न रावण इत्येतावतैव समाप्यम् । 'हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ।' अत्र रत्नानां निधेरित्य**विशेष एव वाच्यः** ।

'आवर्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।
भङ्गाश्च वलयस्तेन त्वं लावण्याम्बुवापिका ॥'

अत्रावर्त एवेति **नियमो न वाच्यः** ।

'यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ।'

---

१ 'अत्र शस्त्रमोक्षणहेतु' ग. २ 'लभ्यते' ग–ख. ३ 'द्वितीयार्थ व्यति' ख. ४ 'इति परिष्कारं' इति नास्ति ख–पुस्तके. ५ '' रत्नमुपेक्षितुमित्याकाङ्क्षा' नि–ख. ६ 'दुर्गतो' नि.

इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः । क्रमेणोदाहरणम्—

'मुखं चन्द्र इवाभाति ।'

'तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरतावृतः ।
दधते स परां शोभां तदीया विभ्रमा इव ॥'

पूर्वोदाहरणेषूपमानोपमेययोरेकस्यैव साधारणधर्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः । एवमनुप्रासे वैफल्यमपार्थत्वम् । यथा—

'अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥' ( रुद्रट० २.२३ )

एवं समासोक्तौ साधारणविशेषणवशात्परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्याप्रस्तुतप्रशंसायां व्यञ्जनैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् । क्रमेणोदाहरणम्—

'अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥' ( शिशु० ९.१० )

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते ।

'आहूतेषु विहङ्गमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥' ( भल्लटशतके ३९ )

अत्राचेतनः प्रभोरभिधानमनुचितम् । एवमनुप्रासे प्रसिद्धभावस्य ख्यातविरुद्धत्वम् । यथा—

'चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम् ।
वृषं वृषभकेतुश्च आरुरुक्षन्त भूभुजः ॥'

उक्तदोषाणां च क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह—

**वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।**
**रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥ १६ ॥**

एषु चास्वादस्यैकरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः । क्रमेण यथा—

'तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन्मनो निर्भरम् ।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥'

---

१ 'धर्मेणान्वयसिद्धेः प्रक्रान्तस्य स्फुटोऽनिर्वाहः' ग—घ. २ 'त्वस्यानुप्रासार्थत्वम्' ख. ३ 'ध्वम्' इति मुद्रितभल्लटशतके. ४ 'विनय' इति मुद्रितभल्लटशतके. ५ 'व्यादस्य' ग—घ. ६ 'गुणः' ग; 'गुण इति भाक्तव्यपदेशो गुणः' ख.

अत्र टकारे कुत्सितो यथा ।

'मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भःक्षोदमुद्यत्प्रसभमभिनभःक्षिप्तनक्षत्रलक्षम् ।
कर्णान्तस्थाग्निदग्धप्रभिभररभसोद्भ्रान्तभस्मप्रवेग-
क्रान्तब्रह्माण्डखण्डं प्रविशतु शिवं शाम्भवं ताण्डवं वः ॥'

अत्रोद्धतताण्डवं वाच्यम् । इत्थं परे मम । रौद्रादिरसत्वे तद्विलक्षणेऽपि दुःश्रवत्वमलन्तं गुणः । यथा—'उत्कृत्योत्कृत्य कृत्तिम्—' इत्यादि ( मालती० ५.१६ )। अत्र बीभत्सो रसः ।

सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ।

तथा पुनरिति गुण एव । यथा—

'करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥'

अत्र हि सुरतारम्भगोष्ठ्यां 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितिः । आदिशब्दाच्छमकथास्तुतिषु बोद्धव्यम् ।

स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ॥ १७ ॥

यथा—

'पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम् ।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत' ॥ (दमयन्तीकथा)

अत्रेन्द्रपक्षे पविशब्दो निहतार्थः । सिंहपक्षे नतशब्दो मातङ्गार्थेऽप्रयुक्तः ।

गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ।

यथा—

'त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः' ॥ ( कुमार० २.१३ )

स्वयं वापि परामर्शे

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा—

'युक्तः कलाभिस्तमसां विवृद्ध्यै क्षीणश्च ताभिः क्षतये च यस्याः ।
शुद्धं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि' ॥

कथितं च पदं पुनः ॥ १८ ॥

विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ॥ १९ ॥
अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ।

गुण इत्येव । यथा—'उदेति सविता ताम्रः—' इत्यादि । अत्र विहितानुवादः ।

---

१ 'ढ्ढं' ग. २ 'ध्वोद्धतं वाच्यम्' ग.; 'अत्रोद्धतताण्डवं' ख. ३ [illegible] स्थले पठ्यते. ४ 'तद्दर्शिन' ख.

पादाघातादशोको विकसति बकुलो योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः, स्फुटति च हृदयं विप्रयोगस्य तापैः ।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥ २४ ॥
अह्न्यम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात् ।
न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्यूह्यमन्यत्कविसमयगतं सत्कवीनां प्रबन्धे ॥ २५ ॥

एषामुदाहरणान्याकरेषु स्पष्टानि ।

धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ।
आरूढत्वादिबोधाय

यथा—'पूरिते रोदसी ध्वानैर्धनुर्ज्यास्फालनोद्भवैः'[१] । अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्यार्पीकरणं[२] बोध्यते । आदिशब्दात् 'भाति कर्णावतंसस्ते' । अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः । एवं श्रवणकुण्डलशिरःशेखरप्रभृतिः । एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्ते इति स्थितावपि 'पुष्पमाला विभाति ते' । अत्र पुष्पशब्द उत्कृष्टपुष्पबुद्धये । एवं मुक्ताहार[३] इत्यत्र मुक्ताशब्देनान्यरत्नामिश्रितत्वम् ।

प्रयोक्तव्याः स्थिता अमी ॥ २६ ॥

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः, न त्वस्थिता जघनकाञ्चीकरकङ्कणादयः ।

क्वचानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।

यथा—

'गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्' ॥
( अमरु० ४० )

अत्र[४] पीडयेति न्यूनम् ।

क्वचिन्न दोषो न गुणः

न्यूनपदत्वमित्येव । यथा—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः' ॥ (विक्रमो० ४.२)

---

१ 'रचित' ख. २ 'धनुष्यारोपीकरणं' लि; 'धनुरारोपणं' ख. ३ 'मुक्ताहारो' लि; 'मुक्ताहारो' ग—घ. ४ 'अत्र...न्यूनम्' इति नास्ति ग-पुस्तके.

प्रधानेतरेषु रसेषु स्वाङ्गत्वविश्रमरहितत्वात्पूर्णरसतानवभासाच्च विच्छिन्नतया सञ्चारिर-सनाम्ना व्यपदेशः प्राच्यानाम् । अस्मत्पितामहानुजकविपण्डितमुख्य-श्रीचण्डीदास-पादानां तु खण्डरसनाम्ना । यदाहुः—

'अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी[3] स्याद्रसान्तरे ।
नास्वाद्यते समग्रं तत्ततः खण्डरसः स्मृतः ॥' इति ।

ननु 'आद्यः करुणबीभत्सरौद्रवीरभयानकैः' (तृतीये परिच्छेदे) इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र

'कपोले जानक्याः करिकलभदन्तद्युतिमुषि स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्छृण्वन्रजनिचरसेनाकलकलं जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'
(दशरूपके २.१२ इत्यत्र महानाटके १.१९ इत्यत्र च)

इत्यादौ समावेशः । अत्रोच्यते—इह खलु रसानां विरोधिताया अविरोधितायाश्च त्रिधा व्यवस्था । कयोश्चिदालम्बनैक्येन, कयोश्चिदाश्रयैक्येन, कयोश्चिन्नैरन्तर्येणेति । तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः । तथा हास्यरौद्रबीभत्सैः सम्भोगस्य वीरकरुणरौद्रा-दिभिर्विप्रलम्भस्य । आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः । नैरन्तर्यविभावैक्याभ्यां शान्तशृङ्गारयोः । त्रिधाप्यविरोधो वीरस्याद्भुतरौद्राभ्यां शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेनेति । तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः ।

एवं च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्र-यत्वेन न विरोधः । यच्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनु-रागो दर्शितः, तत्र 'अहो गीतमहो वादित्रम्' इत्यद्भुतरसान्तरा निवेशनान्नैरन्तर्या-भावान्न शान्तशृङ्गारयोर्विरोधः । एवमन्यदपि ज्ञेयम् । 'पाण्डु क्षामं वदनं—' इत्यादौ च पाण्डुतादीनामिव भावः करुणवद्विप्रलम्भेऽपीति न विरोधः ।

**अनुकारे च सर्वेषां दोषाणां नैव दोषता ॥ ३१ ॥**

सर्वेषां दुःश्रवत्वप्रभृतीनाम् । यथा—

'एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन ।'

अत्र दुश्च्यवनशब्दोऽप्रयुक्तः ।

**अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।**
**अदोषता च गुणता ज्ञेया चानुभयात्मता ॥ ३२ ॥**

अनुभयात्मता अदोषगुणात्मता ॥

इति श्रीमद्विश्वनाथकविराजविरचिते साहित्यदर्पणे दोषनिरूपणो
नाम सप्तमः परिच्छेदः ।

---

१ 'रसेषु' इति नास्ति ग-पुस्तके. २ 'बाध्योऽथ' ग. ३ 'यदङ्गं' ग-ख. ४ शार्ङ्गधरपद्धतौ (३९५०) महानाटकस्थमेतत्. ५ 'विरोधिनोः' ग-ख. ६ 'भयानक...निष्ठत्वेन' इति नास्ति ग-पुस्तके. ७ 'अन्तरेण विरोधः' लि-ख-ग. ८ 'करुणविप्रलम्भेऽपि' लि-ख. ९ 'नत्वस' ग.

## अष्टमः परिच्छेदः ।

गुणानाह—

**रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा ।**

**गुणाः**

यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वाच्छौर्यादयो गुणशब्दवाच्याः, तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषा माधुर्यादयोऽपि स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपयिकानुगुण्यभाज इत्यर्थः । यथा चैषां रसमात्रस्य धर्मत्वं तथा दर्शितमेव ।

**माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा ॥ १ ॥**

ते गुणाः । तत्र—

**चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।**

यत्तु केनचिदुक्तम्—'माधुर्यं द्रुतिकारणम्' इति, तन्न । द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन कार्यत्वाभावात् । द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम् । तच्च—

**सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥ २ ॥**

सम्भोगादिशब्दा उपलक्षणानि । तेन सम्भोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया ।

**मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विना ।**
**रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥ ३ ॥**
**अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।**

यथा—'अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तःसन्तापसन्ततिम्' ॥

यथा वा मम—

'लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि' ॥

**ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ॥ ४ ॥**
**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ।**

अस्यौजसः । अत्रापि वीरादिशब्दा उपलक्षणानि । तेन वीराभासादावप्यस्यावस्थितिः ।

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ॥ ५ ॥**
**उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह ।**

---

१ मम्मटभट्टेन काव्यप्रकाशेऽष्टमोल्लासे 'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्'. २ 'आस्वादस्व-रूपा' लि-ख. ३ '[illegible]' लि. ४ '[illegible]' लि-ख. ५ '[illegible]' ग.

शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ॥ ६ ॥
तथा समासो बहुलो घटनौद्धत्यशालिनी ।

यथा—'चञ्चद्भुज-' इत्यादि ।

चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ॥ ७ ॥
स प्रसादः समस्तेषु रसेषु रचनासु च ।

व्याप्नोति आविष्करोति ।

शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः ॥ ८ ॥

यथा—

'सूचीमुखेन सकृदेव कृतव्रणस्त्वं मुक्ताकलाप लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा स्वप्नेऽपि तां कथमहं न विलोकयामि ॥'
(सहृदयानन्द २.५२)

एषां शब्दगुणत्वं च गुणवृत्त्योच्यते बुधैः ।

'शरीरस्य शौर्यादिगुणयोग इव' इति शेषः ।

श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः ॥ ९ ॥
गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ।

ओजसि अस्मदुक्ते ओजःशब्दवाच्ये शब्दार्थधर्मविशेषे । तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा । यथा—

'उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन्प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमुद्गच्छति ॥'

अयं बन्धवैकट्यात्मकत्वादोज एव । समाधिरारोहावरोहक्रमः । आरोह उत्कर्षः, अवरोहोऽपकर्षः, तयोः क्रमो वैरस्यानावहो विन्यासः । यथा—'चञ्चद्भुज-' इत्यादि । अत्र पादत्रये क्रमेण बन्धस्य गाढता । चतुर्थपादे त्वपकर्षश्च । तस्यापि च तीव्रप्रयत्नोच्चार्यतया ओजस्विता । उदारता विकटत्वलक्षणा । विकटत्वं पदानां नृत्यत्प्रायत्वम् । यथा—

'सुचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झणिति रणितमासीत्तत्र चित्रं कलं च ।'
(वामनीयकाव्यालंकारसूत्रवृत्तौ ३.१.२२ इत्यत्र)

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्दौजोऽभिमतमेषाम् । प्रसाद ओजोमिश्रितशैथिल्यात्मा । यथा—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्' इति । (वेणी० ३.३२)

माधुर्यव्यञ्जकत्वं यदसमासस्य वर्णितम् ॥ १० ॥
पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ।

---

१ 'सकलेषु' लि. २ वर्णोत्तमं श्लोक इत्युक्तः ख-ग-पुस्तकयोः.

**अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।**

यथा—'अनङ्गमङ्गलभुवः—' इत्यादि । रुद्रटस्त्वाह—

'असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥'

अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः ।

**ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥ ३ ॥**
**समासबहुला गौडी**

यथा—'चञ्चद्भुज—' इत्यादि । पुरुषोत्तमस्त्वाह—

'बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च ॥'

**वर्णैः शेषैः पुनर्द्वयोः ।**
**समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥ ४ ॥**

द्वयोर्वैदर्भीगौड्योः ।

यथा—

'मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥' (शिशु० ६-२०)

भोजस्त्वाह—

'समस्तपञ्चषपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥' ( सरस्वती० २ )

**लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता ।**

यथा—

'अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥'

कश्चिदाह—

'मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी ॥'

अन्ये त्वाहुः—

'गौडी डम्बरबद्धा स्याद्वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥'

**क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ॥ ५ ॥**

वक्त्राद्यौचित्यादिशब्दाद्वाच्यप्रबन्धौ । रचनादीत्यादिशब्दाद्वृत्तिवर्णौ । तत्र वक्त्रौचित्याद्यथा—

---

१ 'ओज' ख-ग. २ शार्ङ्गधरपद्धतौ चन्द्रिकस्य. ३ 'कुपित' नि-क. ४ 'वक्त्रा' नि.

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्' ॥(वेणी० १.२२)

अत्र वाच्यस्य क्रोधाद्यव्यञ्जकत्वेऽपि भीमसेनवक्तृकत्वेनोद्धता रचनादयः । वाच्यौ-चित्यं चोदाहृते 'मूर्धव्याधूयमान—' इत्यादौ । प्रबन्धौचित्याद्यथा नाटकादौ रौद्रेऽ-प्यभिनयप्रतिकूलत्वेन न दीर्घसमासादयः । एवमाख्यायिकायां शृङ्गारेऽपि न मसृ-णवर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । एवमन्यदपि ज्ञेयम् ॥

इति साहित्यदर्पणे रीतिविवेचनो नाम नवमः परिच्छेदः ।

---

## दशमः परिच्छेदः ।

अथावसरप्राप्तानलङ्कारानाह—

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥ १ ॥**

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथानुप्रासोपमा-दयः शब्दार्थशोभातिशायिनो रसादेरुपकारका अलङ्काराः । अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः । शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वाच्छब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात्प्रथमं तमेवाह—

**आपाततो यदर्थस्य पौनरुक्त्यावभासनम् ।**
**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥ २ ॥**

उदाहरणम्—

'भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः' ॥ ( श्रीकण्ठस्तव )

अत्र भुजङ्गकुण्डल्यादिशब्दानामापातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनम् । पर्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम् । 'पायादव्यात्' इत्यत्र क्रियागतोऽयमलङ्कारः, 'पायात्' इत्यस्य 'अपायात्' इत्यत्र पर्यवसानात् । 'भुजङ्ग-कुण्डली' इति शब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम् । 'हरः शिवः' इति द्वितीय-स्यैव । 'शशिशुभ्रांशु' इति द्वयोरपि । 'भाति सदात्यागः' इति न द्वयोरपि । इति शब्दपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालङ्कारत्वम् ।

**अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।**

स्वरमात्रसादृश्यं तु वैचित्र्याभावान्न गणितम् । रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः ।

---

१ 'ध्वनि' ग. २ 'दीर्घ' ख-ग. ३ 'शब्दशोभातिशयिन' लि. 'शोभाभ्य' ख. ४ 'विशाल' ख-ग. ५ 'कुर्वन्ति' ख-ग. ६ 'पौनरुक्त्येन भासनम्' लि.

'केशः काशस्तबकविकासः कायः प्रकटितकरभविलासः ।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥'

पदान्तगो यथा—

'मन्दं हसन्तः पुलकं वहन्तः' इत्यादि ।

**शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः ।**
**लाटानुप्रास इत्युक्तो**

उदाहरणम्—

'स्मेरराजीवनयने नयने किं निमीलिते ।
पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम् ॥'

अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यस्यार्थस्याभिन्नार्थत्वाल्लाटानुप्रासत्वमेव । 'नयने तस्यैव नयने च ।' अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्यमात्रेण भिन्नार्थः ।

'यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥'

अत्रानेकपदानां पौनरुक्त्यम् । एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः ।

**अनुप्रासः पञ्चधा ततः ॥ ७ ॥**

स्पष्टम् ।

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ ८ ॥**

अत्र द्वयोरपि पदयोः क्वचित्सार्थकत्वं क्वचिन्निरर्थकत्वम् । क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वम् । अत उक्तम्—'सत्यर्थे' इति । तेनैव क्रमेण दमो मोदा-देर्विविक्तविषयत्वं सूचितम् । एतच्च पदपादार्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूततमभेदम् । दिङ्मात्रमुदाह्रियते—

'नवपलाश-पलाशवनं पुरः स्फुटपरागपरागत-पङ्कजम् ।
मृदुल-तान्त-लतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः ॥' (शिशु० ६.२)

अत्र पदावृत्तिः 'पलाशपलाश' इति 'सुरभिं सुरभिं' इत्यत्र च द्वयोः सार्थकत्वम् । 'लतान्तलतान्त' इत्यत्र प्रथमस्य निरर्थकत्वम् । 'परागपराग' इत्यत्र द्वितीयस्य । एवमन्यदप्युदाहार्यम् ।

'यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा ।'

इत्युक्तनयात् 'भुजलतां जडतामबलाजनः' (रघु० ९.४६) इत्यत्र न यमकत्वहानिः ।

**अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि ।**
**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥ ९ ॥**

---

१ '०प्रातिपदिकांशद्योत्यस्या०' क-ग. २ काव्यप्रकाशे नवमोल्लासे उदाहृतमिदम्. ३ 'निरर्थकत्वं क्वचिद् द्वयोर्निरर्थकत्वमित्यत्र वर्णं' ग. ४ '०विविक्त०' ग. ५ 'पादपादार्ध०' नि. ६ वाग्भटालंकारसूत्रे (१.२०) 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् । नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ ॥'

द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च। क्रमेणोदाहरणम्—

'के यूयं स्थल एव संप्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः।
वामा यूयमहो विडम्बरसिकः कीदृक्स्मरो वर्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः॥'

अत्र विशेषपदस्य 'विः पक्षी' 'शेषो नागः' इत्यर्थद्वययोगात्सभङ्गश्लेषः। अन्यत्राभङ्गः।

'काले कोकिलवाचाले सहकारमनोहरे।
कृतागसः परित्यागात्तस्याश्चेतो न दूयते॥'

अत्रैकया सख्या निषेधार्थे नियुक्तो नञ् अन्यया काक्वा दूयत एवेति विध्यर्थे घटितः।

**शब्दैरेकविधैरेव भाषासु विविधास्वपि।**
**वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते॥ १०॥**

यथा मम—

'मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।
विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे॥'

एष श्लोकः संस्कृतप्राकृतशौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव। 'सरसं कइण कव्वं' इत्यादौ तु 'सरसं' इत्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावेन वैचित्र्याभावान्नायमलङ्कारः।

**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते।**
**वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि॥ ११॥**
**श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः।**

क्रमेणोदाहरणम्—

'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥' (शिशु० ९.६)

अत्र 'विधौ' इति विधु-विधि-शब्दयोरुकारेकारयोर्वर्णयोरौकाररूपत्वाच्छ्लेषः।

'किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः।
कान्तोत्सङ्गजुषां नूनं सर्व एव सुधाकिरः॥'

अत्र 'सुधाकिरः' इति क्विप्प्रत्यय-क-प्रत्यययोः। किं चात्र बहुवचनैकवचनयो-रैकरूप्याद्वचनश्लेषोऽपि।

'विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी।
तव दत्तां सदामोदं लसत्तरलहारिणी॥'

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि।

---

१ 'वामाक्षाः' क्ष-ग. २ '०योगत्वात्' क्ष-ग. ३ 'अत्र कयाचित् सख्या' नि-ब. ४ 'अलङ्कार' नि-ब. ५ 'अत्र वचनश्लेषोऽपि' क्ष-ग.

पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।

आदिशब्दात् खड्ग-मुरज-चक्र-गोमूत्रिकादयः । अस्य च तथाविधलिपिसंनिवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम् । तत्र पद्मबन्धो यथा मम—

'मारमासुषमा चारुरुचा मारवधूत्तमा ।
मात्तधूर्ततमावासा सा वामा मेऽस्तु मा रमा ॥'[1]

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः, किं तु विदिग्दलेष्वन्यथा, कर्णिकाक्षरं तु श्लिष्टमेव । एवं खड्गबन्धादिकमप्यूह्यम् । काव्यान्तर्गडुभूततया तु नेह प्रपञ्च्यते ।

रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ॥ १३ ॥
उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ।

च्युताक्षरा-दत्ताक्षरा-च्युतदत्ताक्षरा च । उदाहरणम्—

'कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् ।
किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥'

अत्र 'रसाले' इति वक्तव्ये 'साले' इति 'रः' च्युतः । 'वने' इत्यत्र 'यौवने' इति 'यौः' दत्तः । 'वदनेन' इत्यत्र 'मदनेन' इति 'मः' च्युतः 'वः' दत्तः । आदिशब्दात् क्रियाकारकगुप्त्यादयः । तत्र क्रियागुप्तिर्यथा—

'पाण्डवानां सभामध्ये दुर्योधन उपागतः ।
तस्मै गां च सुवर्णं च सर्वाण्याभरणानि च ॥'

अत्र 'दुर्योधनः' इत्यत्र 'अदुर्योऽधनः' इति । 'अदुः' इति क्रियागुप्तिः । एवमन्यत्रापि ।

अथावसरप्राप्तेष्वर्थालङ्कारेषु सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्राधान्यात् प्रथममुपमामाह—

---

१ 'मातुर्धूर्ततमा' ग.

